हरिणीप्लुता—Def. सयुगात्सलघूविषमे गुरुर्युजि नभौ च भरौ हरिणीप्लुता Scheme—Odd Pādas ⏑ ⏑ –, ⏑ ⏑ –, ⏑ ⏑ –, ⏑ –
Even Pādas ⏑ ⏑ ⏑, – ⏑ ⏑, – ⏑ ⏑, – ⏑ –

Example—No. 75.

**Acknowledgment of obligation.**

It is my pleasant duty to put on record my sincere thanks to the Hon'ble Mr. Justice Bakshi Tek Chand M. A; L.L. B., of the Lahore High Court of judicature, for the interest he has taken in the present publication. I am indebted to all my predecessors who have worked in the field, particularly to L. H. Gray's *Vāsavadattā*. I have to thank my old pupil, Jagdish Shastri, M. A; M.O. L., for correcting proofs and for translating my English Introduction into Sanskrit.[1]

---

1 My old pupil Shrish Chandra Datta has prepared an English translation of the Campū. This was submitted as a thesis for a part of the M.A. Ex. in Skt. of the P. U.

## CONTENTS


(१) समर्पणम्

(२) भूमिका १ २२

(क) चम्पूसमुपलब्धिः १

(ख) स्त्रीणां काव्यनाटकप्रणेतृत्वम् २

(ग) राजकीया चम्पूः २ ३

(घ) कथासारः ३-५

(ङ) चम्पूनिर्माणकालः ५-६

(च) कविपरिचयः ६ ८

(छ) रीतिः ८-१०

(ज) काव्यालङ्कृतयः १०-१७

(झ) छन्दांसि १७-२२

(ञ) धन्यवादः २२

(३) चम्पूकाव्यम् १-१८२

चन्द्रवंशवर्णनम् १-७

बुधोद्भवः ५

पुरूरवोजनिः ५

ययातेरुत्पत्तिः ६

तुर्वसुः ६

तिम्मभूपः ७

ईश्वरोद्भवः ७

नृसिंहराजवर्णनम् ८-१६

नृसिंहराज्यवर्णनम् १६ २३

नृसिंहराजस्य विद्यापुरीप्राप्तिः २४

विजयप्रस्थानम् २४

तुण्डीरदेशवर्णनम् २५ ३३

चोलदेशवर्णनम् ३४

कावेरीवर्णनम् ३५ ४२

चोलदेशभूपवर्णनम् ४३

चोलभूपस्य युद्धोद्योगः ४४

चोलभूपस्य युद्धाय प्रस्थानम् ४५

योद्धृवर्णनम् ४६-५०

युद्धारम्भवर्णनम् ५१

निस्साणशब्दवर्णनम् ५२-५४

सैन्योत्थधूलिवर्णनम् ५५-५६

तुमुलयुद्धवर्णनम् ५७

रेणुवर्णनम् ५७

अतिघोरसमरवर्णनम् ५८-५६

समराङ्गणवर्णनम् ६०-६१

समरवर्णनम् ६२

अनेकपायोधनवर्णनम् ६३

समरवर्णनम् ६४-६६

नरसिंहस्याक्रमणम् ६७

चोलराजग्रहणम् ६८

चोलराजधानीप्रवेशः ६६-७०

समुद्रवर्णनम् ७१-७३

श्रीरामेश्वरसेतुवर्णनम् ७७

श्रीरामेश्वरपूजनम् ७६

श्रीरङ्गपट्टणसमावरणम् ८०

दुर्गजालग्रहणम् ८१-८२

सुरत्राणमोचनम् ८३

विद्यापुरीवर्णनम् ८३-८४

नृसिंहदेवस्य धरित्रीवर्णनम् ८५

| | |
|---|---|
| ओम्बमाम्बापरिणयः | ८६ |
| सुतोत्पत्तिः | ८७ |
| पुत्रजन्मवर्णनम् | ८८ |
| कुमारदर्शनम् | ८९ |
| कुमारवर्णनम् | ९० |
| कुमारस्य विद्याध्ययनम् | ९१ |
| नरसिंहस्य स्वर्गारोहणम् | ९२ |
| अच्युतदेवनवयौवनवर्णनम् | ९३ |
| अङ्गवर्णनम् | ९४-१०४ |
| हयवर्णनम् | १०५-११० |
| अश्वारोहवर्णनम् | ११२ |
| अश्वक्रीडावर्णनम् | ११३-११६ |
| राजस्तुतिः | ११७-१२० |
| उद्यानवर्णनम् | १२१-१२६ |
| भवानीभवनवर्णनम् | १२७ |
| राजकन्यावर्णनम् | १२८ |
| राजकन्यादर्शनम् | १२९-१३० |
| राजकन्यादशा | १३१ |
| राजकन्याकटाक्षवर्णनम् | १३२ |
| पत्रप्राप्तिः | १३३ |
| राजकन्याचिन्तनम् | १३४-१३९ |
| विदूषकवचनानि | १४०-१४१ |
| राजदशावर्णनम् | १४२ |
| राजकन्यादशावर्णनम् | १४३-१४५ |
| राजकन्यामण्डनम् | १४६ |
| राजकन्यापरिणयः | १४७ |
| मधुमासवर्णनम् | १५२-१५३ |
| उद्यानपालिकानिवेदनम् | १५४-१५५ |
| उपवनविहारः | १५६-१५७ |
| पुष्पावचयवर्णनम् | १५८ |
| युवतिजनालापाः | १५९ |
| पुष्पावचयः | १६०-६४ |
| कासारवर्णनम् | १६५ |
| जलकेलिवर्णनम् | १६६-१६९ |
| सन्ध्यावर्णनम् | १७० १७३ |
| चन्द्रोदयः | १७४ |
| वरदाम्बिकागर्भः | १७५-१७६ |
| शैशववर्णनम् | १७७ |
| यौवराज्यवर्णनम् | १७८ |
| कविपरिचयः | १७९-१८० |
| अच्युतरायप्रशस्तिः | १८१-१८२ |

श्रीमति लवपुरशोभिनि पाञ्चनदन्यायमन्दिरे महितम् ।
न्यायाधिपपदमसुलभमभिभूषयतामुदारचरितानाम् ॥
'एम्. ए. एल् एल्. बी.' इति विरुदजुषां विमलशेमुषीभाजाम् ।
सकलहितार्थपराणां श्रीबख्शीटेकचन्दनृवराणाम् ॥
करकमलयोश्चमत्कृतिसाराभिनवार्थसार्थसंकलिता ।
सादरमेषा चम्पूः साह्लादमुपायनीक्रियते ॥

# भूमिका

## चम्पूसमुपलब्धिः ।

चतुर्विंशत्यधिकैकोनविंशतिशततमे ख्रिष्टीयसंवत्सरे गतोऽहं दक्षिणदेशान्। तत्र तञ्जोरपुरे जीर्णमेकं वरदाम्बिकापरिणयन्नाम करलिखितं ग्रन्थं राजकीये पुराणहस्तलिखितपुस्तकानां सङ्ग्रहेऽध्यगच्छम् । अस्य च ग्रन्थस्यानुसन्धानायाधिगमो दुष्कर इति देवनागर्य्यां लिप्यामस्य प्रतिलेखो मत्कृते कारितोऽभूत् । ग्रन्थोऽयमद्यावध्यप्रकाशित एवासीत् । प्रणेत्री चास्य विदुषी । अथ च षड्विंशत्यधिकैकोनविंशतिशततमे ख्रिष्टीयसंवत्सरे प्रयागे समायोजिताया भारतीयप्राच्यसमित्याश्चतुर्थेऽधिवेशनेऽस्योपलब्धिर्मयोदघोष्यत, अष्टाविंशत्यधिकैकोनविंशतिशततमे ख्रिष्टीयसंवत्सरे भारतीयप्राच्यसमित्या लवपुरीये पञ्चमेऽधिवेशने मया 'तिरुमलाम्बाया अम्बिकापरिणयचम्पूः' इति नामको लेखोऽप्यपठ्यत । तत्र च संक्षेपतो वस्तुनिर्देशभाषाविवेचनैतिहासिकघटनासमालोचनानि निरदिश्यन्त । अथाहं सम्पूर्णमिमं ग्रन्थं सम्पिपादयिषुरन्यानपि वरदाम्बिकापरिणयस्य हस्तलिखितग्रन्थानन्वेषयितुं प्रायतिषि । कृतेप्यष्टवर्षावधि महति प्रयासे वैफल्यमुपगतवति, समुपलब्धस्यास्य ग्रन्थरत्नस्य भाविनं लोपमपाचिकीर्षुर्लवपुरीयप्राच्यमहाविद्यालयस्य पत्रिकायां ग्रन्थमेनत् प्राकाशयम् । मदनुरोधमूरीकृत्य चास्य हिन्दीभाषानुवादस्तत्रभवद्भिर्महामहोपाध्यायविरुदभाग्भिर्जयपुरीये संस्कृतमहाविद्यालये प्रधानाध्यापकैः श्रीगिरिधरशर्मचतुर्वेदैः, अजमेरीये 'म्योचीफ्' इत्याख्ये राजकीये महाविद्यालयेऽध्यापकैः पण्डितपुरुषोत्तमशर्मभिश्च लवपुरात् प्रचरन्त्यां संसारसाहित्यरत्नमालायां प्रकाशितोऽभूत् । मूलग्रन्थस्य भाषा दुरूहा टीकामृते दुरधिगमा । अतः सटीकस्य मूलग्रन्थस्य प्रकाशो बहुभ्यो दिवसेभ्योऽपेक्षित आसीत् । बहुकालोत्पन्नाञ्चेमामपेक्षां मनसिकृत्यायं सटीको ग्रन्थो मया प्राकाश्यं नीतः ।

## स्त्रीणां काव्यनाटकप्रणेतृत्वम् ।

आरम्भादेव भारतीयसाहित्यपरम्परायां स्त्रियो दर्शितादरा अधिगतमहितपदा अप्रतिषिद्धगतयश्च दृश्यन्ते । काव्ये नाटके च न केवलं पुरुषाणामेव स्त्रीणामप्यधिकृतिरभूत् । वेदेष्वपि लब्धप्रवेशाः स्त्रियो विभाव्यन्ते। आर्याणां प्राथमिके साहित्यग्रन्थे हिन्दूनाञ्च विशेषादरणीये धर्मग्रन्थे ऋग्वेदे विंशत्यधिकानां सूक्तानामृषयः स्त्रियस्सन्ति[1] । अस्य समाम्नायस्य गोप्तार ऋषय आसां सूक्तप्रणेत्रीणां नामान्यपाकरिष्यन् , परमेतैर्निगदेन वंशाद्वंशान्तरमासां नामान्यपरिमेयकालात् सुरक्षितानि । न केवलं श्रुतिस्मृतिग्रन्थेष्वेव स्त्रीणां प्रवेशोऽभूत्, दृश्येषु श्रव्येषु चाप्येतासां गतिर्निराबाधैव । संस्कृतसुभाषितावलीष्वेतासां भूयांसि पद्यरत्नान्युद्धृतानि वर्तन्ते । तत्रेमा मुख्यतया निर्दिश्यन्ते—

सीता, विजया, सुभद्रा, प्रभुदेवी, विकटनितम्बा, जघनचपला, इन्दुलेखा, मुरला, मुरिका, भवदेवी, अभिरामकामाक्षी, मधुरवाणी, रामभद्राम्बा[2]। छेकैश्चासां कविता श्लाघिता । सा च प्रायो मानवहृदयस्य भावान् साधु स्फुटयति । साहित्यकलाप्रदर्शिनी चेयं कविता पाषाणकलाकोविदैः शिल्पिभी रचिता मूर्तिरिव । परं खेदास्पदमिदं यत्स्त्रीप्रणीतमेकमपि काव्यं नाटकं वा सम्पूर्णं नोपलभ्यते । महांश्चायं हर्षावसरो यदियं चम्पूः स्त्रीनिर्मिता सम्पूर्णा चाधिगता । स्त्रीनिर्मिता चेयमेव केवला चम्पूः ।

## राजकीया चम्पूः ।

चम्पूरियं राजकीयेतीदमप्यस्या महत्त्वम् । ‘ राजकीया ’ इत्युक्तेऽर्थद्वयमवगम्यते । (१) अस्या निर्मात्री विजयनगरस्य राज्ञो महिषी (२) कथा चेयं विजयनगराधिपतेरच्युतरायस्य तन्महिष्या वरदाम्बिकायाश्च परिणयविषयिणी । नेयं केवलं कल्पनात्मिका निराधारा च । कियाँश्चिदं-

---

१ इस्लामक्रिश्चियनधर्मयोस्सम्यगालोचनादस्य तत्त्वस्य वैशिष्ट्यं प्रतीयते । उभयोर्धर्मयोस्साक्षात्कर्तार ऋषयः पुरुषा एवासन् । बाइबलकुराणयोर्नैकोपि मन्त्रः स्त्रीप्रणीतो विद्यते ।

२ रामभद्राम्बायाः काव्यं नातिचिरादेवाधिगतं सम्पादितञ्च ।

शोऽस्या ऐतिहासिको विजयनगरराजकुलस्य भूपद्वय्या इतिवृत्तं नः प्रदर्शयति । चोलदेशस्य कावेर्या युद्धादीनाञ्च वर्णनं तात्कालिकस्थानविशेषपरिस्थितिज्ञानायालम् ।

वरदाम्बिका, यस्याः परिणयोऽच्युतरायेण सहात्र वर्णितः, सलगक्षितीशितुरात्मजासीदिति राजनाथसंकलितेऽच्युतरायाभ्युदय उक्तम् । अत्र प्रकृतांश उद्ध्रियते—

**महत्तरे मानवलोकशासितुर्मनोऽनुकूला महिषीपदे तदा ।**
**कृताभिषेका सलगक्षितीशितुर्वरात्मजासीद्वरदाम्बिका वधूः ।**

## कथासारः

आसीदोषधीपतिर्नाम नृपतिः । तस्य बुध इति सुतो बभूव । तदीयः पुत्रः पुरुरवाः, पुरुरवस उर्वश्यां जात आयुः । आयुषः शताश्वमेधकर्ता नहुषः । तस्य ययातिः । ययातेस्तुर्वसुः । तुर्वसुवंशे तिम्मभूपोऽभूत् । स देवकीमुदूह्येश्वरं सुतं लेभे । ईश्वरो बुक्कमाम्बामुपयम्य नृसिंहनामानं कुमारं सुषुवे ।

नृसिंहो विजयाय प्रतस्थे। प्राचीमाशां विजित्य दक्षिणदिशि चोलदेशानयासीत् । कावेरीं तीर्त्वा तस्या दक्षिणकूलभागे वरुथिनीं निवेशयामास । शत्रुदेशं प्राप्य तद्देशीयजनप्रमथनात्स्वसेनां निवर्तयामास । चतुरङ्गबलसन्नद्धश्चोलभूपालो युद्धाय बद्धादरो बभूव । प्रवृत्ते च महति सम्पराये भीतं स्वसैन्यं विलोक्य नृसिंहो महान्तं हस्तिनमारुह्यारातिमभ्यगात् । समराङ्गणे चोलेन्द्रं विलोक्याजुहाव । तत्रोभयोर्युद्धे प्रवृत्ते नृसिंहदेवः कुन्तप्रहारेण हस्तिपृष्ठाच्च्युतं चोलेन्द्रं स्वयमपि गजपृष्ठादवतीर्य जीवग्राहं जग्राह । शत्रुचमूसमूहस्तदानीं तत्रास । राजा च विजयोदयविजृम्भितहर्षसम्भ्रमया वरूथिन्या प्रकाशमानः शत्रुराजधानीं प्रविवेश ।

रामेश्वराभिमुखं गत्वा समुद्रं ददर्श । समुद्रतटे रामसगरादीनां वीराणां देवदानवादीनाञ्चाद्भुताद्भुतानि कर्माणि शृण्वन् रामेश्वरं ववन्दे ।

अथ पराजित्यानेकान् तत्रत्यान् नृपान् समुद्रस्य स्थिरे जले सेतुं निर्माय श्रीरङ्गपट्टणाभिधां पुरीमावरिष्ट । तदधीश्वरो महावीरस्त्वपत्य-

कलत्रादिभिस्समागत्य पादयोर्निपत्यात्मनो गत्यन्तराभावमुद्द्योतयन् राज्यं नृसिंहसादकरोत्। कृपाविष्टमनास्तु नृसिंहस्तं तत्र पुरि स्थापयित्वा दुर्मन्नरादि-महादुर्गजालं मतरङ्गयभिधं च दुर्गमग्रहीत्। ततश्च गोकर्णनाथं नत्वा तुला-पुरुषदानपूर्वं नानाविधदानजातं तेने।

अनेकमहीनाथानुगम्यमान उत्तरां दिशं प्रतस्थे। तत्र काम्बोजवाह्लीक तुरुखारादिभिः सह पराजित्य सुरत्राणमनुग्रहधियाऽमुञ्चत्। ततश्च विविधविभवव्यापृतो निजराजधानीं विद्यापुरीं प्रतिनिवृत्यासेतोराहिमाद्रे-रविहतसुमहाशासनो धरित्रीं पालयामास।

ततश्च दिवसकरकुलोत्तंसां रामाम्बासुतामोम्बमाम्बां परिणीय तस्यामच्यु-तप्रसादादच्युतनामानं पुत्रमेकं लेभे। यौवनमारूढवति चाच्युतराये नृसिंहदेवः सुरसख्यमभजत्। स्वर्गते पितर्यच्युतरायः सिंहासनमारुरोह।

एकदोद्यनगतो भवान्यायतने कामपि रमणीयां बालां ददर्श। निर्वर्ण्य सुचिरं स राजन्यो विस्मयविधेयतया नियन्त्रित इव, नियमित इव, निरभिज्ञ इव, निरर्गलरागाभियोगनिघ्न इव निश्चलध्यानशील इव, निरवधिकानन्दम-नुसन्धान इव निरुद्धमनोवृत्तिः, निस्पन्दीभवदिन्द्रियवैचक्षयो निर्निमेष-वीक्षणः क्षणमतिष्ठत्।

सापि रविकुलललामभूता नाम्ना वरदाम्बिका गौरीपूजायै तत्र समागता ध्यानावसाने च समुन्मीलितलोचना विग्रहवन्तमिवानङ्गं तमभिवीक्ष्यासमाप्त-क्रियैव पवनान्दोलितलतेव कम्पमानगात्रलतिका किञ्चिदपसृत्य निर्निमेषं वसन्तावतारमिव तं पुनः पुनश्चक्षुर्भ्यां पिबन्ती स्वात्मनोऽप्यप्रभवन्ती चित्तमिव मणिस्तम्भमवलम्बितवती। हर्षरससन्दोहेन चिरननिमेषतया स्थितैरभिव्यज्यमानानुरागरससान्द्रैरनेकरससंविधानैरवलोकनैरितस्ततः श्वेति-मानं विकिरन्ती कुसुमशरशरव्यतामयासीत्।

परस्परविलोकितसमनन्तरमेव व्यत्यस्तचित्ताविव विस्मृतनिमेषौ विवर्जितनिखिलव्यापारौ, व्यत्यासससंपृक्ताविव, परिहृतचैतन्याविव तावुभा-वभूताम्।

ततश्च प्रधानमन्त्री तत्रागत्य राज्यकार्याय विदूषकमुखेन राजानं विज्ञापयामास । विदूषकनिवेदिताममात्यस्य विज्ञापनामाकर्ण्यानिच्छन्नपि भूपतिश्चलितुं कथमपि समर्नानहत् ।

राजकन्यापि निजागारमगात् । आगत्य भवनम् अनाभाषमाणा सखीजनम्, अनवेक्षमाणा परिचारिकावर्गम्, अशुश्रूषमाणा गुरून्, अवन्दमाना कलशोदयकुलदैवतम्, अगणयन्ती वीणाम्, अनालापयन्ती सारङ्गान्, अनुलापयन्ती हरिणीम्, अनर्त्तयन्ती बर्हिणम्, अनुद्वाहयन्ती कृत्रिमपुत्रिकाम्, असंयोजयन्ती हंसमिथुनम्, अनध्यापयन्ती राजकीरम्, विसर्जितमज्जना, सैरन्ध्रिकानुरोधादविरतकैश्यसमीकरणविचारा, विकलसकलपरिचारिका, विमुखीकृताखिलसखीजना, विस्मृतानुरूपव्यापारा, तमेव निध्यायन्ती, अविदितहृदयतापातिशया चेतसि महतीं चिन्तामतानीत् ।

अथ सखीभिस्सानुरोधमनुबध्यमाना शालीनतया गौरीवने तस्य विश्वम्भरापतेर्दर्शनात्प्रभृति कर्म किमपि किञ्चिदुदञ्चति स्म, चाञ्चल्यमिदं वारयितुमहं न पारयामि, समुचितमितः परं भवतीभिरेव निवारणीयमिति निश्चयमुदीरयन्ती सैरन्ध्रीभिः समं सत्वरमभिवर्त्तमानं सौविदल्लं कमप्यद्राक्षीत् । आपृष्टश्च स प्रहृष्टमना विस्पष्टमाचष्ट—"यदत्रभवती प्रार्थयमानायाच्युतमहाराजाय दत्ता, भवतीं प्रसाधयितुमेताः सपुरन्ध्र्यः सैरन्ध्र्यः प्रेषिताः, तदत्रभवती सत्वरमुद्युङ्क्तां प्रसाधनाय" इति ।

तदनु मेदिनीपतिः मङ्गलाचरणसमुचितविविधालङ्कारशृङ्गारितः सम्बन्धिगृहं समासाद्य राजकन्यां विधिनोपयम्यामुष्यै पट्टाभिषेकमहिषीपदमदात् ।

अथ तयोः कालात् कुमारोऽजायत, चिनवेङ्कटाद्रिरिति संज्ञितोऽभूत् । अनन्तरमच्युतमहीमहेन्द्रो बाल्य एव समुल्लसदसाधारणानुभावमत्युदारं कुमारमालोक्य शुभंयुनि दिने दिदेश शाश्वतं युवराजपदम् ।

## चम्पूनिर्माणकालः ।

चम्पूरियं नूनमच्युतरायराज्यसमकालिक्येव । अच्युतरायस्य राज्या-

भिषेक एकोनत्रिंशदधिकपञ्चदशशततमे ख्रिष्टीयसंवत्सरेऽभूदिति कलहस्तिशिलालेखतो ज्ञायते । एतस्मात्कालादनन्तरमेव चम्पूनिर्माणकाल इति सिद्धम् । सार्वभौमाच्युतरायपुत्रस्य चिनवेङ्कटाद्रेर्यौवराज्याभिषेकपर्यवसाना कथेयम् । चिनवेङ्कटाद्रेर्यौवराज्याभिषेकसमयो न क्वचिदपि लभ्यते । अच्युतरायाभ्युदये ( ३५२ श्लोके ) राजनाथेनोक्तम्—अच्युतरायस्य राज्याभिषेके तत्सूनुश्चिनवेङ्कटाद्रिर्यौवराज्यार्ह आसीदिति । परमच्युतरायस्य राज्याभिषेके तदनन्तरं वा चिनवेङ्कटाद्रिर्यौवराज्यं लेभ इति तु राजनाथेन न क्वचिदप्युक्तम् । अच्युतरायराज्याभिषेकसमये चिनवेङ्कटाद्रिर्यौवराज्यार्ह आसीदिति राजनाथोक्तिरेतच्चम्प्वन्तर्गतवृत्तेन न सङ्गच्छते । तिरुमलाम्बाकथानकानुसारेण तु वरदाम्बिकापरिणयात्प्रागेवाच्युतरायस्य राज्याभिषेकः सिध्यति, परिणयानन्तरञ्च सुतोत्पत्तिरिति । एवञ्च पूर्वोक्ता राजनाथोक्तिर्न कथमपि संघटते । अच्युतरायस्य सिंहासनारोहणाद्दशवर्षानन्तरं द्वादशवर्षानन्तरम्वा चिनवेङ्कटाद्रेर्यौवराज्यपदलाभस्सम्भवितुमर्हति । अच्युतरायराज्याभिषेकश्चैकोनत्रिंशदधिकपञ्चदशशततमे ख्रिष्टीयसंवत्सरेऽभूदिति चम्पूनिर्माणकालश्चत्वारिंशदधिकपञ्चदशशततमाद्वर्षादनन्तरमेव न प्राक् । यतः ख्रिष्टीयसंवत्सरस्य द्विचत्वारिंशदुत्तरपञ्चदशशतावध्यच्युतरायस्य राज्यमभूत्, यतश्च भुवं शासत्येवाच्युतराये चम्पूरियं निरमीयत, अतश्चम्पूनिर्माणकालोऽच्युतरायराज्यान्तसमयात्प्रागेव । तदित्थं ख्रिष्टीयसंवत्सरस्य चत्वारिंशदुत्तरपञ्चदशशततमद्विचत्वारिंशदधिकपञ्चदशशततमवर्षयोर्मध्य एव चम्पूनिर्माणमभूदिति दिक् ।

## कविपरिचयः ।

चम्पूकर्त्री तिरुमलाम्बा चाच्युतरायस्य राज्ञो महिषी बभूव । हाम्पेनाम्नि नगरे विठ्ठलमन्दिरेऽच्युतरायस्य भूयसां ताम्रपट्टानाम्मध्य एकतमे पट्टेऽच्युतरायकृतं सुवर्णमेरुदानमुट्टङ्कितमस्ति । प्रशस्तिश्चेयं वोड्डआतिरुमलाम्बया श्लोकैरुपनिबद्धा । इयं तिरुमलाम्बैव चम्पूनिर्मात्री । अत्र चम्पूपसंहृतिवाक्यानि प्रमाणानि ।

तत्र 'राजाधिराजाच्युतरायसार्वभौमप्रेमसर्वस्वविश्वासभुवा' इति पदं तिरुमलाम्बाया अच्युतरायमहिषीत्वे प्रमाणम् । बाह्यप्रमाणमपीममेवार्थं विशद-

यति । तैलगूभाषायां रचिते विजयवितसमुनाम्नि सुभद्रापरिणयापरपर्याये ग्रन्थेऽपि तिरुमलाम्बाऽच्युतरायमहिष्येवेत्युक्तम् ।

एतत्तु महामोदकरं यदनयेतरकविसमं स्वोदन्तो न निगूहितः । ग्रन्थ-समाप्तिप्रकरणेऽनया स्वकलाविशेषस्फुटीकरणे नानादरोऽत्यादृतः । अयञ्च ग्रन्थावसानगतः कविपरिचयो न केवलं भूयः कौतुकमातनोति, अपि तु रचयित्र्या महान्तं महिमानमपि स्फुटमुद्घोषयति, स चात्रोद्ध्रियते—

इत्येकवाराकर्णनमात्रदृढावधारितनव्यकाव्यनाटकालङ्कारपुराणागमरहस्य-सारस्यानुबन्धसमिन्धानस्वाभाविकप्रतिभानुभावया विद्याविशेषनिरवद्यविद्व-द्वरसकलकविकुलश्रवणानन्दचिन्तितानन्ताभीष्टफलाश्रयणविश्राणनकामगवी-भवदशेषभाषाविषयसविशेषोन्मेषचतुरिमगर्भितसरसप्रबन्धसन्दर्भया, विवि-धविद्याप्रगल्भराजाधिराजाच्युतरायसार्वभौमप्रेमसर्वस्वविश्वासभुवा, निरुपाधिक-महोपकारनिर्माणधर्मनिर्मलहृदयया, निखिललिपिविलेखननियतवितरण-कृतहस्तहस्तारविन्दया, विरिञ्चचञ्चलनयनानखाञ्चलसमुदञ्चितविपञ्ची-प्रपञ्चितपञ्चममधुरिमोदञ्चनविकस्वरकण्ठस्वरया, विपुलतलातलविहार-विनोदसाकारावतीर्णशतपर्णासनवरवर्णिनीमतिनिर्णायिकया, नानादेशप्रतिष्ठि-तानेककविरचितवाजपेयपौण्डरीकसर्वतोमुखमहाध्वरद्विजवरवितीर्यमाणाशीर्वि-शेषपरिपोषितभाग्यसौभाग्यया, नियतरक्षितकविकुटुम्बया, तिरुमलाम्बया-निर्मितं वरदाम्बिकापरिणयन्नाम चम्पूकाव्यमाचन्द्रतारकमभिवर्द्धताम् ।

अयञ्च ग्रन्थान्तसन्दर्भस्तिरुमलाम्बाया वैदुष्यं काव्यनाटकालङ्कार-पुराणागमादिरहस्याभिज्ञत्वमनेकभाषानैपुण्यं नानालिपिविज्ञत्वं कवि-कुटुम्बपालकत्वं धार्मिकत्वं द्विजवररक्षाप्रेम बहुयज्ञानुष्ठानशीलत्वं मन्दिरेष्व-न्येषु धर्मस्थानेषु च द्रव्यदानस्नेहं विद्वज्जनसमितिसंस्थापनप्रियत्वं कलाचातुर्यं पण्डितगोष्ठीसौभाग्यञ्च प्रकटयति । सौन्दर्यावतारतया चास्या अभिनव-रूपबहुत्वमच्युतरायप्रेमसर्वस्वभूततया चास्या राजविस्रम्भपात्रत्वं सिध्यति ।

अस्माच्चम्पूग्रन्थादस्या उत्सर्पिणी उत्प्रेक्षाशक्तिः, स्फारीभवन्ती धिषणा वर्णनकलायां प्रौढी वर्णचित्रेषु चातुरी च स्फुटमवसीयते । प्रचलत्स्वपि

प्रचुरेषु समासतरङ्गेषु विशेषणस्रोतस्सु च द्राक्षारसामोद इव कश्चन नारी-जनसुलभो मोदोऽस्याः कृतिमभिव्याप्नोति । कलैवेयं साहित्यविषयिणी रचनाऽस्याः। अपूर्वं नवञ्चात्र वस्तु । कृतिश्चेयं प्रौढा । सकलकलाभिज्ञाया विदुष्यास्सन्दर्भोऽयं कलावतां विदुषां कृत एव । न च मूढैरकलैरस्य गुणा ज्ञातुं पार्यन्ते । न कयापि तत्कालभवयाऽन्यकालभवया वा राश्यैवं· विधायां भाषायां ग्रन्थो निर्मातुं पार्येत । समस्ते महीमण्डले तिरुमलाम्बा स्वसमयेऽद्वितीयैवाभूत् ।

## रीतिः ।

कृतिरियं चम्पूरित्यभिधीयते । अग्निपुराण[1]काव्यादर्श[2]साहित्यदर्पणेषु[3] मिश्रं चम्पूरित्युक्तम् । मिश्रशब्देन च गद्यपद्यमयी चम्पूरित्यर्थो गृह्यते । हेमचन्द्रेण[4] च चम्पूलक्षणे कश्चिद्विशेषो दर्शितः । तदनुसारं तु चम्पूर्गद्यपद्यमयी साङ्का सोच्छ्वासा च । हेमचन्द्रोक्तो विशेषस्तु चम्पूकर्तृभि· र्नानुसृतो यतः प्रसिद्धेषु नैकेषु चम्पूग्रन्थेषु साङ्कत्वसोच्छ्वासत्वनियमो नोप-लभ्यते । चम्पूसाहित्यं भारते वर्षे प्राचीनसमयाद्विख्यातमस्ति । पालीभाषायां जातकग्रन्था गीर्वाणवाण्यां च जातकमालापञ्चतन्त्रहितोपदेशादयो ग्रन्था गद्यपद्यमयाः । चम्पूलक्षणं चैष्वपि प्रबन्धेषु घटते परं नैते चम्पूसंज्ञां भजन्ते । तदेवं चम्पूलक्षणेऽतिव्याप्तिवारणाय पञ्चतन्त्रादिग्रन्थानां लक्षणप्राप्तं चम्पूत्वं निराकर्तुं विवेकः समुचितः । तथाहि पञ्चतन्त्रादि· ग्रन्थेषु पद्यभागस्य विशेषपदत्वं दृश्यते । विशेषोऽर्थः पद्येषु समाविशितः, गद्ये च स एव विशदीकृतः, कथाभिस्सन्निदर्शितः । चम्पूकाव्येषु च पद्य भागस्य न विशेषस्थानत्वम् । कथायाः कियाँश्चांशोऽत्र पद्ये कियाँश्च गद्ये इति

---

१ मिश्रं चम्पूरिति ख्यातं प्रकीर्णमिति च द्विधा ।
श्रव्यं चैवाभिनेयं च प्रकीर्णं सकलोक्तिभिः—अग्निपुराणे

२ गद्यपद्यमयी काचिच्चम्पूरित्याभिधीयते— काव्यादर्शे

३ गद्यपद्यमयं काव्यं चम्पूरित्याभिधीयते— साहित्यदर्पणे

४ गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः— हेमचन्द्रः—

पद्यगद्ययोरुभयोरपि समकोटित्वमेव। नैकतरस्यैव प्राधान्यम्, अपि तूभयोरेव विशेषः। अन्यच्च नात्र गद्यस्य पद्याश्रयत्वम्। अपि तु गद्यपद्ययोस्तन्तुपटयोरिव परस्परं सम्बन्धः। किञ्च पञ्चतन्त्रादिषु ग्रन्थेषु गद्यं सुगममक्लिष्टञ्च। वैदर्भी च रीतिः। चम्पूग्रन्थेषु समासबहुला गौडी रीतिः। मार्गश्च दुरूहः प्रयत्नापेक्षी च। कथायाः स्रोतश्च सरस्वत्या इव वर्णनसिकतास्वदृश्यतामेति। सूक्ष्मतरं च कथातत्त्वं विप्रकृष्टसम्बन्धैर्वर्णनैर्व्यवधीयते। वर्णनानीमानि कवेरुत्सर्पिणीं धिषणामुत्प्रेक्षातिशयोक्त्याद्यलङ्कारप्रयोगशक्तिञ्च प्रकटयन्ति। शब्दवैचित्र्येणार्थवैचित्र्यं तिरोधीयते। अस्य चम्पूकाव्यस्य गद्यं बाणसुबन्धुदण्डिनां गद्यस्य तुलनां गच्छति।

अस्यां चम्प्वां तिरुमलाम्बया संस्कृतभाषायां महन्नैपुण्यमदर्शि। अस्याश्चम्प्वा अध्ययनात्तिरुमलाम्बाया विविधकोषस्मृतिः प्रतीयते। वर्णनेषु च केषाञ्चिच्छब्दानां सर्वे पर्यायास्समुपलभ्यन्ते। तथाहि करकरवालादीनां शब्दानां सर्वे पर्याया अत्र विद्यन्ते। मार्गश्चात्र गम्भीर ओज इति नाम्ना साहित्ये व्यपदिष्टः। वाक्यानि समासबहुलानि भावगम्भीराणि च, परं न तु माधुर्यव्यञ्जकानि। अत्र संस्कृतसाहित्यप्रसिद्धेभ्यो दीर्घेभ्यः समासेभ्योऽपि दीर्घतरः समासो दरीदृश्यते—

निरन्तरान्धकारितदिगन्तरकन्दलदमन्दसुधारसबिन्दुसान्द्रतरघनाघनवृन्दसन्देहकरस्यन्दमानमकरन्दबिन्दुबन्धुरतरमाकन्दतरुकुलतल्पकल्पमृदुलसिकताजालजटिलमूलतलमरुवकमिलदलघुलघुलयकलितरमणीयपानीयशालिकाबालिकाकरारविन्दगलन्तिकागलदेलालवङ्गपाटलघनसारकस्तूरिकातिसौरभमेदुरलघुतरमधुरशीतलतरसलिलधारानिराकरिष्णुतदीयविमलविलोचनमयूखरेखापसारितपिपासायासपथिकलोकान्। पृ० ३१–३२

यदि चम्पूरियं केवलमेवंविधेन दीर्घसमासबहुलेनैव गद्येन प्रथिताऽभविष्यत्तर्ह्यध्येतुरध्ययनरुचिस्सद्य एव शिथिल्यभविष्यत्। तथाहि कादम्बरीहर्षचरितयोर्दीर्घदीर्घतराः क्लिष्टास्समासा दृश्यन्ते, ततश्चैतयोः कतिपयांशाध्ययनमात्रेणैवाध्येतुः श्रमो भवति। एतयोरनुप्रासो न कमप्यपूर्वं महिमानमावहति, नैकविशेषणभराक्रान्तः शब्दसमुच्चयश्च ग्लानिं जनयति।

दर्भादिबाहुल्यादार्यावर्तारण्येष्विव समासप्राचुर्यादत्र गतिरसुकरा। कथमपि लब्धायामपि गतौ पथिकस्य हिंस्रप्राणिभयमिवाध्येतुः सर्वदैव दुरूहार्थपदक्लिष्टताभयन्तु सततसन्निहितम्। परमस्मिन् चम्पूकाव्ये गद्यपद्ययोस्संमिश्रणमध्येतुः श्रमापनोदाय विनोदाय च, सुविन्यस्तपदगर्भितानां गद्यस्थवाक्यानामेकपरतापरकनिर्जीवतादोषापनयनाय चालम्। गद्यावसाने पद्यं पद्यावसाने च गद्यमित्युभयोर्गद्यपद्ययोरव्यवहितोत्तरमन्योन्यानुसरणं पर्वतयानमिव क्षणे पुरुषमुन्नमयति क्षणेऽधोनयति। इम उन्नयनाधोनयने रसवैविध्यं प्रयच्छतो विश्रामस्थाने च भवतः, चम्पूवनयात्रां च सुकरां सुखनिर्विशेषाञ्च जनयतः।

## काव्यालङ्कृतयः।

ग्रन्थोऽयं नैकैरलङ्कारैरलङ्कृतो विराजते। तत्र केचनालङ्काराः प्रदर्श्यन्ते।

**अनुप्रासः**—तल्लक्षणं यथा—

सरूपवर्णविन्यासमनुप्रासं प्रचक्षते—भामहः

वर्णसाम्यमनुप्रासः—मम्मटः

अनुप्रासः शब्दसाम्यं वैषम्येपि स्वरस्य यत्—विश्वनाथः

**उदाहरणानि—**

तवैव योग्या धरणीन्द्रचन्द्र गुणान्ववायानुगुणा पुरन्ध्री।
अनुग्रहेण प्रणयेन वास्या गृहाण पाणिं किमहो विलम्बः॥

पृ० १४१ प० १२०

अत्र स्वरवैषम्येपि णकारस्य साम्यम्।

**अर्थान्तरन्यासः**—तल्लक्षणं यथा—

ज्ञेयः सोऽर्थान्तरन्यासः वस्तु प्रस्तुत्य किञ्चन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः—दण्डी

उपन्यसनमन्यस्य यदर्थस्योदितादृते।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा—भामहः

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा—मम्मटः

सामान्यं वा विशेषेण विशेषस्तेन वा यदि
कार्यं च कारणेनेदं कार्येण च समर्थ्यते ।
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः—विश्वनाथः

**उदाहरणानि**

गृहीतमात्रे युधि चोलभूपे कृपानिधिः श्रीनरसिंहदेवः ।
स तां न्यषेधत्समरात्स्वसेनां सतां प्रसादः सहजो न रोषः ॥

पृ० ६६ प० ४७

अत्र 'युधि चोलभूपे गृहीतमात्रे श्रीनरसिंहदेवः समरात्स्वसेनां न्यषेधद्' इत्ययं विशेषः ' सतां प्रसादः सहजो न रोषः ' इत्यनेन सामान्येन समर्थ्यते ।

कयाचिदाकुञ्चितमुक्तशाखस्तरुः प्रसूनान्यवितीर्य पूर्वम् ।
ववर्ष पश्चादिव सानुतापस्तीव्रानुरागं हि तनोत्युपेक्षा ॥

पृ० १६२ प० १४३

अत्र 'कयाचिदाकुञ्चितमुक्तशाखस्तरुः पूर्वं प्रसूनान्यवितीर्य पश्चात् सानुताप इव ववर्ष' इत्ययं विशेषः 'तीव्रानुरागं हि तनोत्युपेक्षा' इति सामान्येन समर्थ्यते ।

**उत्प्रेक्षा**—तल्लक्षणं यथा—

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा—दण्डी
अविवक्षितसामान्या किञ्चिच्चोपमया सह ।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता—भामहः
भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य समेन यत्—मम्मटः
भवेत्सम्भावनोत्प्रेक्षा— विश्वनाथः

**उदाहरणानि—**

मधुव्रतापादितमन्युरेखास्पन्दा मधुश्रीरधुना विभाति ।
त्वदागमानन्दविशेषशंसिभुजापरिस्पन्दमिवोद्वहन्ती ॥

पृ० १५६ प० १३५

अत्र भ्रमरापादितमन्युरेखास्पन्दा मधुलक्ष्मी राजागमानन्दविशेष-शंसिनं भुजापरिस्पन्दमुद्वहन्ती सम्भाव्यते ।

**उपमा—तल्लक्षणं यथा—**

यथा कथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा— दण्डी
विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत्साम्यं गुणलेशेन सोपमा—भामहः
साधर्म्यमुपमा भेदे— मम्मटः
साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः—विश्वनाथः

**उदाहरणानि—**

दुग्धाम्बुराशिलहरीव तुषारभानुमर्थं नवीनमनघा सुकवेरिवोक्तिः ।
प्रत्यङ्मुखस्य यमिनः प्रतिभेव बोधं प्रासूत भाग्यमहितं सुतमोम्बमाम्बा ॥
पृ० ८७ प० ६१

अत्रोम्बमाम्बा दुग्धाम्बुराशिलहर्या, सुकवेरुक्त्या, प्रत्यङ्मुखस्य यमिनः प्रतिभयोपमिता । तया प्रसूतस्य सुतस्य तुषारभानुना, नवेनार्थेन, बोधेन च साम्यमुपनिबद्धम् ।

मुहुः सरोवारिषु केलिलोला निमज्जनोन्मज्जनमाचरन्ती ।
वलाहकान्तःपरिदृश्यमाना सौदामिनीवाजनि चञ्चलाक्षी ॥
पृ० १६८ प० १५२

अत्र चञ्चलाक्षी सौदामिन्योपमीयते । सरोवारिषु तस्या निमज्जनो-न्मज्जनस्य सौदामिन्या बलाहकान्तर्वर्त्तनेन समता समुद्भाविता ।

अपि चास्मिन्काव्ये साम्याश्रितमपूर्वमेवार्थवैचित्र्यं प्रदर्शितं तिरुम-लाम्बया । तत्कृतं साम्यारोपणञ्च नवामर्थशक्तिमुल्लासयच्चमत्कृतिविशेषं धत्ते । तथाहि—सत्स्वपि कविकुलप्रतिपादितेषु बहुलेषु सन्ध्यावर्णनेषु कवि-कुलशेखरीभूतायास्तिरुमलाम्बायाः सूर्यास्तमयवर्णनं कामप्यपूर्वां रुचिं तनोति ।

अपरगिरितरूणोरातपच्छायलेशैर्हरितमलिनवर्णैरञ्चितस्यांशुमाली ।
कवलितदिनधेनोः कण्ठरक्तेन रक्तं विस्मरनिजपादैः श्मश्रुलं प्रोथमासीत्
पृ० १७१ प० १५६

अत्र पर्वतस्य तरक्षुरूपत्वं सूर्यकिरणानां व्याघ्रमुखश्मश्रुरूपत्वम्, अंशुमालिनश्च मुखरूपत्वं दिवसस्य धेनुरूपत्वमंशुमालिनो मुखस्य रक्तत्वे धेनुभक्षणनिदानत्वञ्च प्रोक्तम्।

अत्र विस्तृतं युद्धवर्णनं युद्धावलोकनपुरस्सरमेव विहितमित्याभाति। रणभूमिं सान्तःपुरो भूपतिर्याति स्मेति तत्रभवता जूलियसमहोदयेन प्रतिपादितम्।

वरदाम्बिकाया मध्यस्य वर्णनमसामान्यां नवतां पुष्णाति कविललामभूतायास्तिरुमलाम्बायाः प्रतिभाविशेषस्य—

परचक्रमखिलमाक्रम्य नियतमन्योन्याभिलषितान्यूनाभोगसमुन्नत्योरारोहवक्षोरुहयोरन्तरा किमिति न शून्यता मध्यभुवि विद्योतताम्।

पृ० १३७—३८

पुष्पेषुः केदाराजीवीव द्विपत्रितं भ्रमररूपं शृङ्गारबीजं सरसे पद्मरूप आलवालवलये रोपितवान् इत्यहो विचित्रैवात्र कविप्रौढोक्तिः—

उच्चैरुन्नमिताग्रमल्पविततं पक्षद्वयं बन्धुरं
बिभ्राणो रसिकोऽविशन्मधुकरो यद्गर्भमम्भोरुहः।
नित्यं पालयता द्विपत्रितमहो शृङ्गारबीजं निजं
तत्प्रायः सरसालवालवलये पुष्पेषुणा रोपितम्॥

पृ० १५१ प० १३१

मधुव्रतास्तरुणोपवनभवनेषु क्षणं लतासु क्षणं तरुषु डयमाना लतातरुमिथुनानामन्योन्यसन्देशदूता इव समलक्ष्यन्त इत्ययमर्थो नैसर्गिकीमतुलाञ्चास्याः कल्पनाशक्तिमुदाहरति—

अभङ्गुरमधुरझङ्काररववादजातपाटवाः, तरुणोपवनभवनेषु समुल्लसितपल्लवपटलप्रकटितपरस्परानुरागभरितानां लतातरुमिथुनानां परस्परप्रेषणकल्पितयातायाता दूता इव समदृश्यन्त मधुव्रतव्राताः। पृ० १५१—१५२

वृक्षच्छायायाः पुरस्ताद् दूरं स्थितायाः क्रमेण वृक्षमूलं प्रपन्नायाः पूर्वं दूरं स्थितया क्रमेण च क्रोडं गतया वशं प्रपन्नया नवोढया साम्यप्रतिपादनं कवेस्तीक्ष्णां बुद्धिं व्यनक्ति—

स्थितां पुरस्तादतिदूर एव क्रमेण च स्वस्य वशं प्रपन्नाम् ।
वोढा नवोढामिव सानुरागश्छायां तरुः क्रोडगतामतानीत् ॥
पृ० १६३-४ प० १४६

**परिसङ्ख्या**—तल्लक्षणं यथा
प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥
परिसङ्ख्या— विश्वनाथः

**उदाहरणानि**—

भङ्गस्तरङ्गमालिनि, परार्थाभिलाषः सुकवित्वशालिनि, सन्मार्गलङ्घनं चन्द्रमसि, विषयवृत्तक्रमश्छन्दसि पक्षपातः, पतङ्गेषु इत्यादि पृ० १९—२२

अत्र कथिताद्वस्तुनस्तरङ्गमालिनोऽन्यस्य लोकस्य व्यपोह इति परिसंख्या । श्लेषगर्भिता चेयम् । भङ्गशब्दस्य कल्लोलजालं पराजयश्चेत्यर्थद्वयम् । एवमन्यत्राप्यूह्यम् ।

**यमकम्**—तल्लक्षणं यथा—
अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम्— दण्डी
तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
प्रसादि स्वाभिधानं च यमकं कृतिनां मतम् ॥
प्रतीतशब्दमोजस्वि सुश्लिष्टपदसंधि च ।
प्रसादि स्वाभिधानं च यमकं कृतिनां मतम्— भामहः
अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः
यमकम्— मम्मटः
सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकम्— विश्वनाथः
आवृत्तिं वर्णसंघातगोचरां यमकं विदुः— कुवलयानन्दः

**उदाहरणानि**—
तेने तुलापूरुषदानपूर्वं तेनेह नानाविधदानजातम् ।
संख्ये भवन् यद्यपि सूक्ष्मलक्षः स स्थूललक्षोऽपि विहापितेषु ॥
पृ० ८२ प० ५२

अत्र भिन्नार्थयोः तेने तेने(इ) शब्दयोः पुनरावृत्तिर्यमकम्।

**रूपकम्**—तल्लक्षणं यथा—

उपमैव तिरोभूतभेदा रूपकमुच्यते— दण्डी

उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।

गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः— भामहः

तद्रूपकमभेदो य उपमानोपमेययोः— मम्मटः

रूपकं रूपितारोपाद्विषये निरपह्नवे— विश्वनाथः

**उदाहरणम्**—

अरविन्दबन्धुकुरविन्दपिधाने चपलेन बालशशिना व्यपनीते ।

घुसृणं वियन्मघवनीलकरण्डाद्गलितं यथा घनमदृश्यत सन्ध्या ॥

पृ० १७३ श्लो० १५८

अत्र वियति करण्डत्वम्, कमलिनीनाथे पिधानत्वम्, शशिनि बालत्वम्, सन्ध्यायां घुसृणत्वं चारोपितम् ।

**विरोधः**—तल्लक्षणं यथा—

विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।

विशेषदर्शनायैव स विरोधः स्मृतो यथा— दण्डी

गुणस्य वा क्रियाया वा विरुद्धान्यक्रियाभिधा ।

या विशेषाभिधानाय विरोधं तं विदुर्बुधाः— भामहः

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः— मम्मटः

जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः

क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ।

विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः— विश्वनाथः

**उदाहरणानि**—

विलसत्तरवारिधारोऽपि विजृम्भितप्रतापः, वितरणोज्ज्वलवृत्तिरप्यवितरणोज्ज्वलवृत्तिः, अजनार्दनोऽप्यनन्तभोगाश्रयः इत्यादि पृ० १८-१६

अत्र विरुद्धानां पदार्थानां संसर्गदर्शनम् । अत्र वारिधाराधरस्य प्रकृष्टतापावलिमण्डितत्वम् अनन्तभोगाश्रयस्य चाजनार्दनत्वम् इति विरोधः । विलसन्ती तरवारेर्धारा यस्येति विग्रहे विरोधपरिहारः । एवमुत्तरत्रापि

जनानामर्दनो न भवतीति यौगिकार्थमादाय परिहारः। विरुद्धानां पदार्थानां च संसर्गदर्शनं विशेषदर्शनायैवेति बोध्यम्।

**श्लेषः**—तल्लक्षणं यथा—

श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः— दण्डी

उपमानेन यत्तत्त्वमुपमेयस्य साध्यते।
गुणक्रियाभ्यां नाम्ना च श्लिष्टं तदभिधीयते— भामहः

वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः।
श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा— मम्मटः

श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष उच्यते— विश्वनाथः

श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।
भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्॥ कुवलयानन्दः

**उदाहरणानि—**

प्रह्लादमानसहितो नखरात्युदग्रविक्रान्तिरश्रमकृतोरुहिरण्यदानः।
यस्सिंहसंहननतानुसरज्जयश्रीर्निष्कण्टकां वसुमतीं निखिलामतानीत्॥

पृ० ८-९ प० १२

अथ प्रथमद्वितीयतृतीयपादेषु विशेषणानि नृपतिं नृसिंहं नृसिंहावतारं विष्णुञ्च विशेषयन्ति। अर्थद्वयन्तु टीकायां स्पष्टीकृतम्।

सम्प्रत्यहं पुष्पवतीति वातव्याधूतपल्लवकराञ्चितचेष्टितेन।
मा मां स्पृशेति सहसैव निवारयन्तीं वासन्तिकामलिभियोपगता न काचित्॥

पृ० १६३ प० १४४

अत्र पुष्पवतीति पदस्य 'कुसुमवती' 'रजस्वला' चेत्यर्थद्वयम्।

**सहोक्तिः**—तल्लक्षणं यथा—

सहोक्तिः सहभावस्य कथनं गुणकर्मणाम्— दण्डी

तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रये।
पदेनैकेन कथ्येते सहोक्तिः सा मता यथा— भामहः

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्— मम्मटः

सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः।
स सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्— विश्वनाथः

उदाहरणम्—

उल्लासैः सममधुरुत्सवाः प्रसिद्धिं प्रासीदन् सह महतां मनोभिराशाः ।
आशीर्भिस्सममुदगुर्मृदङ्गनादाः काराभिस्सममगलन् कलिप्रकाराः ॥

पृ० ८८ प० ६३

अत्र सहार्थस्य बलाद् द्वयोरेकं वाचकम् ।

**स्वभावोक्तिः**—तल्लक्षणं यथा—

नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा— दण्डी

स्वभावोक्तिरलंकार इति केचित्प्रचक्षते ।
अर्थस्य तदवस्थत्वं स्वभावोभिहितो यथा— भामहः

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्— विश्वनाथः

स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्— कुवलयानन्दः

उदाहरणम्—

हस्तेन हस्तमवकृष्य रदौ रदाभ्यां संघट्य निष्ठुरहतिस्फुरितस्फुलिङ्गम् ।
घण्टानिनादमुखरौ करिणौ तदीयौ चण्डाहवक्रमचमत्करणं व्यधत्ताम् ॥

पृ० ६८ प० ४४

अत्र हस्तिनोर्हस्ताहस्ति दन्तादन्ति युद्धं हस्तिजातिस्थस्वभाववर्णनपरम् ।

संस्कृतसाहित्ये स्त्रीणां रूपवर्णनं प्रायिकम्, पुरुषाणां सौन्दर्यचित्रणन्तु क्वाचित्कम् । परमस्ति च स्तोत्रत्रयं शङ्कराचार्यनिर्मितम्—(१) विष्णुपादादिकेशान्तवर्णनम् (२) शिवपादादिकेशान्तवर्णनम् (३) शिवकेशादिपादान्तवर्णनम् । तत्र च विष्णुशिवस्तुतिव्यपदेशेन पुरुषस्य पादाद्यङ्गानां वर्णनम् । परमेतत् पुरुषकृतं पुरुषवर्णनमस्ति । अत्र चम्पूकाव्ये तु स्त्रीकृतं पुरुषवर्णनं दृश्यते यत् विस्तृततमेपि संस्कृतसाहित्ये नोपलभ्यते । तिरुमलाम्बया पत्युरच्युतरायस्याक्षरबद्धं चित्रं चित्रितम् । चित्रं चेदमपूर्वाभिरुपमाभी रुचिराभिरुत्प्रेक्षाभिरलङ्कृतं संस्कृतसाहित्येऽतुलं पदं धत्ते ।

## छन्दांसि ।

बहूनि वृत्तान्यत्र प्रयुक्तानि तिरुमलाम्बया । तेषां समासतोऽत्र लक्षणादिकं निरूप्यते ।

**आर्या**—तल्लक्षणं यथा—

यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥

नेदं वर्णच्छन्दः, परं मात्राच्छन्दः । प्रथमे पादे द्वादशमात्राः, द्वितीयेऽष्टादश, तृतीये द्वादश, चतुर्थे पञ्चदश ।

**उदाहरणम्**—पद्यम् १५१

**अनुष्टुप्**—तल्लक्षणं यथा—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥

विधिर्यथा ०००० ⏑–⏑–[१]

**उदाहरणानि**—प० ७, २७, ५५, ७३, ७४, ८४, ६०, ६२, १०८, ११४.

**इन्द्रवज्रा**—एकादशाक्षरमिदं छन्दः। प्रतिपादमेकादशवर्णा भवन्ति।

तल्लक्षणं यथा ।

स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

विधिर्यथा— – – ⏑, – – ⏑, ⏑–⏑, – – ।

**उदाहरणानि**—पद्यानि २, ६, ४१, ४६, ५२, १३६, १४८.

**उपेन्द्रवज्रा**—सामान्यत इन्द्रवज्रावत् । तल्लक्षणं यथा—

उपेन्द्रवज्रा जतजास्ततो गौ ।

विधिर्यथा— ⏑–⏑, – – ⏑, ⏑–⏑, – – ।

**उपजातिः**—तल्लक्षणं यथा—

स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।
इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ।

इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणमुपजातिः । केषुचित्पादेषूपेन्द्रवज्रा केषुचिदिन्द्रवजा । प्रतिपादमेकादशवर्णाः । विधिर्यथेन्द्रवज्रोपेन्द्रवज्रयोः ।

---

१—अत्र '⏑' इदं लघुचिह्नं '–' इदञ्च गुरुचिह्नं कल्पितमिति ज्ञेयम् ।

**उदाहरणानि**—पृ० १, ४, ८, ११, १२, २०, २१, ३४, ४६, ५०, ५३, ५७, ६७, ६८, ७८, ६६, ६८, १०७, ११०, १११, ११६, ११७, १२५, १२६, १२७, १३४, १३६, १३८, १४०, १४२, १४३, १४६, १४७, १४६, १५०, १५२, १५३, १५४, १६२, १६६, १६८, १७० ।

**रथोद्धता**—एकादशाक्षरं छन्दः । तल्लक्षणं यथा—

रान्नराविह रथोद्धता लगौ ।

विधिर्यथा — ⏑ —, ⏑ ⏑ ⏑, — ⏑ —, ⏑ —,

**उदाहरणम्**—पृ० ६५,

**शालिनी**—तल्लक्षणं यथा—

मात्तौ मौ चेच्छालिनी वेदलोकैः।

प्रतिपादं द्वादशाक्षराणि । विधिर्यथा — — —, — — ⏑, — — ⏑, — —

**उदाहरणानि**—पृ० ३२, ३६, ३६,

**स्वागता**—तल्लक्षणं यथा—

स्वागतेति रनभाद् गुरुयुग्मम्

प्रतिपादमेकादशवर्णाः

विधिर्यथा — ⏑ —, ⏑ ⏑ ⏑, — ⏑ ⏑, — —

**उदाहरणानि**—पृ० ५, ४८, ५६, ८२, ६६, १५७, १५६, १६७

**द्रुतविलम्बितम्**—तल्लक्षणं यथा—

द्रुतविलम्बितमाह नभौ भरौ

प्रतिपादं द्वादश वर्णाः । विधिर्यथा—

⏑ ⏑ ⏑, — ⏑ ⏑, — ⏑ ⏑, — ⏑ —

**उदाहरणानि**—पृ० ३५, १७४

**औपच्छन्दसिकम्** (पुष्पिताग्रापरपर्यायम् )—तल्लक्षणं यथा—

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ।

पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥

**उदाहरणानि** पुष्पिताग्राच्छन्दोविवेचने निरूपितानि

**पुष्पिताग्रा**—(औपच्छन्दसिकापरपर्यायवाच्या) तल्लक्षणं यथा

अयुजि नयुगरेफतो यकारो युजि च नजौ जरजाश्च पुष्पिताग्रा ।

समपादयोस्त्रयोदश वर्णाः। विधिर्यथा ⏑⏑⏑, –⏑–,⏑–⏑,–⏑–,–

विषमपादयोर्द्वादशाक्षराः। विधिर्यथा ⏑⏑⏑, ⏑⏑⏑,–⏑–,⏑––

इदमर्धसमवृत्तम् ।

**उदाहरणानि**— प० १०, ६२, ६६, ८६, १००, १४१, १६०, १६४, १६१.

**वंशस्थम्**-तल्लक्षणं यथा—जतौ तु वंशस्थमुदीरितं जरौ ।

प्रतिपादं द्वादश वर्णाः। विधिर्यथा ⏑–⏑, ––⏑, ⏑–⏑, –⏑–

**उदाहरणानि**—प० ३, ६, १६, ५४.

**कलहंसः**—तल्लक्षणं यथा – सजसा सगौ च कथितः कलहंसः ।

प्रतिपादं त्रयोदश वर्णाः। विधिर्यथा ⏑⏑–, ⏑–⏑, ⏑⏑–, ⏑⏑–, –

**उदाहरणम्**— प० १५४.

**मञ्जुभाषिणी**— तल्लक्षणं यथा—

सजसा जगौ भवति मञ्जुभाषिणी

प्रतिपादं त्रयोदश वर्णाः। विधिर्यथा ⏑⏑–, ⏑–⏑, ⏑⏑–, ⏑–⏑, –

**उदाहरणानि**— प० ८३, १०५.

**प्रहर्षिणी**—तल्लक्षणं यथा—

त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।

प्रतिपादं त्रयोदश वर्णाः—विधिर्यथा—

–––, ⏑⏑⏑, ⏑–⏑, –⏑–, –

**उदाहरणानि**—प० ४२, ६३

**वसन्ततिलका**—तल्लक्षणं यथा—

उक्ता वसन्ततिलका तभजा जगौ गः ।

चतुर्दशवर्णात्मकमिदं छन्दः। विधिर्यथा ––⏑,–⏑⏑, ⏑–⏑, ⏑–⏑,––

**उदाहरणानि**— प० १३, १८, १६, २२, ३३, ४४, ५१, ६१, ६४, ७१, ८१, ८७, १०६, ११२, ११५, ११६, १२८, १२६, १३०, १३२, १३३, १३७, १४४, १६३, १६.५, १६६

**मालिनी**—तल्लक्षणं यथा—

ननमयययुतेयं मालिनी भोगिलोकैः।

प्रतिपादं पञ्चदश वर्णाः। विधिर्यथा ⏑⏑⏑, ⏑⏑⏑, – – –, ⏑ – –, ⏑ – –

**उदाहरणानि**— प० ३८, ८५, ६१, ६३, १०३, १०६, १५६.

**पृथ्वी**—तल्लक्षणं यथा—

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।

प्रतिपादं सप्तदश वर्णाः। विधिर्यथा ⏑ – ⏑, ⏑⏑ –, ⏑ – ⏑, ⏑⏑ –, ⏑ – –, ⏑ –

**उदाहरणम्**— प० ८० ।

**मन्दाक्रान्ता**—तल्लक्षणं यथा—

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्।

प्रतिपादं सप्तदश वर्णाः। विधिर्यथा– – –, – ⏑⏑, ⏑⏑⏑, – – ⏑, – – ⏑, – –

**उदाहरणम्**—प० १७

**नर्कुटकम्**—तल्लक्षणं यथा—

हयदशभिर्नजौ भजजला गुरु नर्कुटकम्।

सप्तदश वर्णाः। विधिर्यथा ⏑⏑⏑, ⏑ – ⏑, – ⏑⏑, ⏑ – ⏑, ⏑ – ⏑, ⏑ –

**उदाहरणानि**—प० २६, ४५।

**शिखरिणी**—तल्लक्षणं यथा

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी। प्रतिपादं सप्तदश वर्णाः। विधिर्यथा ⏑ – –, – – –, ⏑⏑⏑, ⏑⏑ –, – ⏑⏑, ⏑ –

**उदाहरणानि**—प० २३, ४०, ११३।

**शार्दूलविक्रीडितम्**—तल्लक्षणं यथा—

सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्। एकोनविंशति वर्णाः। विधिर्यथा – – –, ⏑⏑ –, ⏑ – ⏑, ⏑⏑ –, – – ⏑, – – ⏑, – ।

**उदाहरणानि** प०—१४, २४, २६, ३०, ३१, ६६, ७७, ८८, ८६, ६४, ६५, १०१, १०४, १२१, १२३, १२४, १३१, १७१, १७२, १७३।

**स्रग्धरा**—तल्लक्षणं यथा—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।

प्रतिपादमेकविंशतिवर्णाः । विधिर्यथा – – –, –⏑–, –⏑⏑, ⏑⏑⏑, ⏑ – –, ⏑ – – ⏑– – ।

**उदाहरणम्**—पृ० ५६ ।

**वियोगिनी**—सुन्दरीत्यपरपर्यायात्मकं छन्दः। तल्लक्षणं यथा—

विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी ।

विषमपादयोर्दश वर्णाः । विधिर्यथा—⏑⏑–, ⏑⏑–, ⏑–⏑, – ।

समपादयोरेकादश वर्णाः । विधिर्यथा—⏑⏑–, –⏑⏑, –⏑–, ⏑– ।

इदमर्धसमवृत्तम् ।

**उदाहरणम्**—पृ० ७६ ।

**हरिणीप्लुता**—तल्लक्षणं यथा—

सयुगात्सलघूविषमे गुरुर्युजि नभौ च भरौ हरिणीप्लुता ।

विधिर्यथा—विषमपादयोः— ⏑⏑–, ⏑⏑–, ⏑⏑–, ⏑– ।

समपादयोः—⏑⏑⏑, –⏑⏑, –⏑⏑, –⏑– ।

**उदाहरणम्**—पृ० ७५ ।

---

# धन्यवादः

अस्य ग्रन्थस्य प्रकाशे समुत्सुकाः 'एम्० ए०, एल्० एल्० बी०' इति विरुदभाजो लवपुरप्रतिष्ठिते पञ्चनदीयन्यायमन्दिरे समुपगतन्यायाधीशपदास्तत्रभवन्तो बख्शीटेकचन्दमहाभागा मे धन्यवादार्हाः । अन्ये चास्मिन् क्षेत्रे स्पृहणीयं परिश्रमं कृतपूर्विणो मम सहायभूताः साहित्यसुहृदस्तुल्यास्तेषु च विशेषतो वासवदत्तासम्पादकः एल् एच् ग्रे महोदयः । एतद्ग्रन्थप्रूफसंशोधनेन इङ्गलिशभाषायां मया लिखितस्यैतच्चम्पूपोद्घातस्य देवगिरानुवादेन च मम चिरन्तनोऽन्तवासी एम्० ए०, एम्० ओ० एल्० पदविभूषितो जगदीशशास्त्री प्रशंसामर्हति[1] ।

---

१ मम चिरन्तनच्छात्रेण श्रीशचन्द्रदत्तेनैतच्चम्पूकाव्यमिङ्गलिशभाषायामनूदितम्, तच्च तेन पञ्चनदीयविश्वविद्यालयस्य एम्. ए. परीक्षायां निबन्धरूपेण समर्पितमासीत् ।

# अथ
# वरदाम्बिकापरिणयचम्पूः

अस्ति खलु समस्त-जगदानन्द-मूल-कन्दलम्, इन्दीवर-कुल-तपः-फलम्, इन्दिरारमण-हृदान्तर-सत्त्वपरिणतिः,

---

नत्वाहं गुरुवरपादपद्मयुग्मं
ध्यात्वा तं हृदि जगतीपतिं महेशम्।
मान्यश्रीबुधवरलक्ष्मणस्वरूपै-
रादिष्टः किल कुतुकं तनोमि किञ्चित् ॥ १ ॥
अम्बापरिणयाख्यायां कुर्वे चम्प्वां मनोरमाम्।
टीकां विद्वन्मनोमोदकारिणीं क्लेशहारिणीम् ॥ २ ॥
अप्रसिद्धपदन्यासैर्भ्रष्टैर्मात्रापदाक्षरैः।
दुनोति मानसं चम्पूर्दुरूहा रसवेदिनाम् ॥ ३ ॥
तदर्थमर्थमादृत्य पूर्तिन्र्योध्या विधेलिमा।
कौशेये शणयोगाभा विद्वद्भिः सा विदेलिमा ॥ ४ ॥

अथ "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इत्यलङ्कारालङ्कर्मीणाचार्योक्तेः कविकुलपरम्परापरिप्राप्तं काव्यं निःश्रेयससाधनमित्यवधारयन्ती प्रकृतकाव्यप्रचयपरिसमाप्तिकुशलम् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इति त्रिविधमङ्गलमध्ये वस्तुसंकीर्तनरूपं मङ्गलं स्वमूलपूरुषवर्णनमभिसंदधती सुधाकरकीर्तनमारभते मूर्तिमतीव सरस्वत्यम्बा कविकुलशेखरीभूताऽऽराधितसाम्बा तिरुमलाम्बा। अस्तिपदं सांप्रतमपि

**शङ्कर-किरीट-शृङ्गाटक-प्राङ्गणोपलाल्य-शैशवः, सलिलराशि-लहरी-लासिका-नटन-विलासारम्भ-गुम्फित-कुसुमाञ्जलि-समञ्जस-किरण-मञ्जरीकः, निखिल-दैवत-कुल-जीवन-कला-सारणी-समुदय-सुधासार-कासारः, वैसारिण-केतु-जीवातुः, ओषधीपतिर्नाम ।**

---

तद्वियमानतास्फोरणार्थम् । खल्विति वाक्यालङ्कारे निश्चयार्थे वा । समस्तस्य जगतो य आनन्दस्तस्य मूलभूतं कन्दलमिव नवाङ्कुरमिव, इन्दीवराणां नीलोत्पलानां कुलस्य समूहस्य यत्तपः—नीरे नालरूपैकपादावष्टम्भेनावस्थान-रूपम्—तस्य फलमिव, इन्दिरारमणस्य लक्ष्मीविलासिनो भगवतो विष्णो-र्हृदो यदान्तरमन्तर्भागस्तत्स्थं यत्सत्त्वं तस्य परिणतिरिव, "चन्द्रमा मनसो जातः" इति श्रुतेः । शङ्करस्य भगवतो महेश्वरस्य यत् किरीटं जटाजूटरूपं मुकुटं तदेव शृङ्गाटकं वर्त्मचतुष्टयमेलनस्थानम्—अतिविस्तृतत्वात्, तस्य प्राङ्गणे आभोग उपलाल्यम् उपलालयितुं योग्यं शैशवं बालभावो यस्य तादृशः, भगवतो बालेन्दुशेखरत्वात् । सलिलराशिः जलधिस्तस्य या लहर्यो वीचयस्ता एव लासिका नर्तक्यस्तासां यो नटनविलासस्य नर्तनविभ्र-मस्याऽऽरम्भस्तस्मिन्नवसरे गुम्फितो ग्रथितो यः कुसुमाञ्जलिः पुष्पाञ्जलि-रञ्जलिमितानि पुष्पाणीति यावत्, ग्रथितपुष्पाञ्जलिपदेन लौकिकः प्रसिद्धः कंसादौ विच्छित्तिविशेषेणारोपितः कुसुमाञ्जलिरभिप्रेयते 'गुलदस्ते'ति प्रसिद्धः, तत्समञ्जसा तत्सदृशी किरणमञ्जरी यस्य स तथाभूतः, निखिलस्य दैवतकुलस्य देवसमुदयस्य जीवनं प्राणभूता याः कलास्तद्रूपा या सारण्यः कुल्याः, जल-प्रवाहा वा, सारयन्ति वाहयन्ति जलमिति व्युत्पत्तेः, तासां समुदयस्य सुधासारभूतपीयूषनिष्यन्दभूतः कासार इव तटाक इव । प्रतिकृष्णपक्षं चन्द्रोऽपचीयते तत्र हेतुश्च देवानां तत्कलास्वादनमेवेति पुराणवार्ता तन्मू-लिकैवेयमुत्प्रेक्षा । वैसारिणो मीनः । 'मीनो वैसारिणोऽण्डजः' इत्यमरः । केतुर्ध्वजो यस्य स देवो मन्मथस्तस्य जीवातुः प्राणप्रदः ओषधीपतिरिन्दुः । नामेति प्रसिद्धार्थम् ।

अलम्भृतो नेत्यवधारयंस्तं मुहुः प्रवृद्ध्या मुखरीकरोति ।
मदन्वयोद्भूतमहीपतीनां दानाम्भसामेष तरङ्गमाली ॥१॥

भक्तानजस्रं भवतापतप्तान् सन्त्रातुकामः सरसैः कटाक्षैः ।
निष्यन्दमानामृतशीतलं यं नालीकनाभो नयनं चकार ॥२॥

यस्य खलु सोदर्यतया पशु-पाषाण-पादपानामप्यश्रान्त-

---

**अलमिति** (यश्चन्द्रः) एष तरङ्गमाली सरित्पतिः मदन्वयोद्भूतमहीपतीनां मत्कुलसंभूतभूभृतां दानाम्भसां विविधदानसंबन्धिसंकल्पजलानाम् अलम्भृतः पूर्णतृप्तो नेत्यवधारयन् विचारयंस्तं सागरं मुहुर्भूयो भूयः प्रवृद्ध्या चन्द्रोदयसमकालं स्वाभाविकेन प्रवर्धनेन मुखरीकरोति शब्दायमानं करोति । अयमाशयः—समुद्रो हि चन्द्रवंश्यभूपतीनां नानाविधदानसंबन्धिसंकल्पजलैः प्रथमत एव पूर्णो भरितोऽस्ति । अथापि चन्द्रेण विचार्यते नायमलम्भृत इति । ततश्च यथा पुत्रैः पर्याप्तपरिवेषणेन परितर्पितोऽपि विप्रः पित्रा नास्य तृप्तौ काचिन्न्यूनता स्यादिति विचारयता पुनः परिवेषणेन मुखरीक्रियते, तथा चन्द्रेण मुहुः सागरप्रवृद्ध्या 'त्वद्वंश्यभूपतिदानजलैरेव नितरां तृप्तोऽस्मि, नाहमितरदपेक्षे' इति प्रतिवचनप्राप्त्य इव मुखरीक्रियते । प्रवृद्धिसामयिकसागरगर्जितमालक्ष्येयमुत्प्रेक्षा । एतेन चन्द्रवंश्यानां राज्ञां दानशीलता ध्वन्यते । उपजातिच्छन्दः ॥ १ ॥

**भक्तानिति** । भवतापतप्तान् संसारसन्तापपीडितान् भक्तान् अजस्रमनवरतं सरसैः सानुरागैः कटाक्षैरक्षिविक्षेपैः सन्त्रातुकामो रिरक्षिषुर्नालीकनाभो कमलनाभो नारायणः कमलं नाभौ यस्येति बहुव्रीहावच्प्रत्ययः समासान्तः । निष्यन्दमानं क्षरयदमृतं तेन शीतलं सुषीमं यं चन्द्रं नयनं नेत्रं चकार निर्ममे । विष्णोः सूर्याचन्द्रमसौ द्वे नेत्रे इति पुराणप्रसिद्धिस्तामभिप्रेत्येयमुत्प्रेक्षा । इन्द्रवज्राच्छन्दः ॥ २ ॥

**यस्येति** । यस्य चन्द्रमसः सोदर्यतया सगर्भ्यतया यथायथं भ्रातृत्वेन भगि-

विश्राणन-पारीणता, प्रकृतिचञ्चलाया अपि पञ्चशरजनन्या मुञ्जकेश-भुजान्तर-निरन्तर-लालन-गौरवम्, अग्निमान्द्य-हेतोरप्यमृतरसस्याजरामरत्व-समुन्मेष-कार्मता च निर्मीयते। यः पुनरुदग्रतर-कराक्रान्त-पर-चक्रः, निसर्ग-विशङ्कटोदय-समुद्गम-निराकृत-सकल-तेजस्वि-मण्डलः, कुण्ठितेतर-कुवलयानन्द-कन्दलः, निखिल-भूभृत्कुल-शिरोभाग-समुल्लसित-पाद-

---

नीत्वेन चेति यावत् पशु-पाषाण-पादपानां कामधेनु-चिन्तामणि-कल्पवृक्षाणाम्, अविश्रान्तमजस्रं यद्विश्राणनं दानं तत्र पारीणता दक्षता निर्मीयते इत्यग्रेण सम्बन्धः। प्रकृतिचञ्चलायाः स्वभावचपलाया अपि पञ्चशरजनन्या मदन-(प्रद्युम्न-) मातुः श्रिय इत्यर्थः। मुञ्जकेशस्य विष्णोर्भुजानां बाहूनामान्तरं मध्यभागस्तत्र निरन्तरमविच्छेदेन यल्लालनं तस्य गौरवं महत्त्वम्। अग्निमान्द्यहेतोरग्निमन्दताकारणस्याप्यमृतरसस्य सुधाऽऽत्मकसलिलस्याजरामरत्वयोर्जरामरणराहित्यस्य समुन्मेषे जनने कार्मता कर्मशीलता च निर्मीयते संपाद्यते। रसावसेकस्याग्निनिर्वापकत्वाद्विरोधाभासोद्भावनायापेः प्रयोगः। चन्द्रसंबन्धादेव तद्भगिन्योः कमलाकामधेन्वोस्तद्भ्रातुः सुधारसस्य च क्रमशो दानालंकर्मीणता स्थिरताऽजरामरीकरणव्रतनदीष्णता चेति भावः। 'स कार्मः कर्मशीलो यः' इत्यमरः। यः पुनरुदग्रतरैः स्फीतैः करैर्मयूखैः। (राजपक्षे—तद्ग्राह्यषष्ठांशाद्यात्मकभागैः) आक्रान्तं स्पृष्टमायत्तीकृतं च परस्य शिशुमारस्य (राजपक्षे—परेषां प्रत्यर्थिनां) चक्रं मण्डलं येन सः। निसर्गतः स्वभावेन विशङ्कटो विशालो य उदयात्समुद्गमः उदयाचलात्प्रादुर्भावः, पक्षे उदयस्योन्नतेः समुद्गम आरम्भस्तेन निराकृतं सकलं तेजस्विमण्डलं येन स तादृशः। कुण्ठितेतरस्य निष्प्रतिघस्य कुवलयानां रात्रिविकासिकमलानामानन्दस्य कन्दलो नवाङ्कुर इव, राजपक्षे—उल्लसितस्य कोः पृथिव्या वलयस्य आनन्दकन्दलः सुखोत्पादकः। निखिलस्य भूभृत्कुलस्य शैलसमूहस्य शिरोभागेषु

पल्लवः, फुल्लेतर-कुशेशय-कोश काराभवन-निवेशित-मधुरस-मलिम्लुच-चञ्चरीक-संचयो व्यञ्जयति राजभावम् ।

[ बुधोद्भवः ]

नवग्रहालीनवहारनायको बभूव तस्माद्बुध इत्युदारधीः ।
अमान्तमन्तर्निजबोधमुज्ज्वलं व्यनक्ति सर्वत्र विभानिभेन यः ॥३॥

[ पुरूरवोजनिः ]

पुत्रस्तदीयो भुवनैकवीरः पुरूरवा नाम भुवं शशास ।
येनोर्वशीहारिसुरारिजेत्रा प्राकाशि नाकेऽपि भुजप्रतापः ॥४॥

---

सानुषु ( राजपक्षे—भूभृतां राज्ञां कुलस्य मूर्धसु ) समुल्लसिताः पादपल्लवाः मृदुलमरीचयो(राजपक्षे पादपल्लवश्चरणकिसलयो)यस्य स तादृशः।"पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च"ति मेदिनी। फुल्लेतरेऽनुद्भिन्ना ये कुशेशयाः कमलानि तेषां कोशाः कुड्मलानि एव काराभवनानि तत्र निवेशितो मधुरसमलिम्लुचः पुष्परसस्तेयकारी चञ्चरीकसञ्चयः भ्रमर-समुदायो येन स तादृशः। अन्यो नृपोऽपि स्वविषये स्तेनान् दण्डयति । एतादृशः सन् शशी स्वीयं राजभावं नृपत्वं व्यञ्जयति प्रकटयति । अत्र श्लेष-महिम्ना कविना साधिम्ना नृपचन्द्रावुपवर्णितौ । राजशब्दश्च चन्द्रार्थोऽपि । यथाह विश्वः—' राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो ' रिति । मूर्त्त इव देव्या भारत्या हर्षप्रकर्षः कवितार्किकचक्रवर्ती श्रीहर्षोऽपि—

" किं च प्रभावनमिताखिलराजतेजा (१३ । १८ ) इत्यादिपद्ये ।

**नवेति** । तस्माच्चन्द्रमसः नव च ते ग्रहा इति नवग्रहास्तेषामाली श्रेणिः सैव नवहारः प्रत्यग्रग्रथिता स्रक् तस्य नायको मध्यमणिः । ' नायको नेतरि श्रेष्ठ हारमध्यमणावपि—' इति मेदिनी । नेता च ' बुध ' इत्यभिधानः उदारधीर्महाप्रज्ञः बभूव जन्म लेभे । यः स्वविभानिभेन कान्तिव्याजेन अन्तः स्ववपुष्यमान्तमसमाविशन्तमुज्ज्वलं बोधं ज्ञानं व्यनक्ति प्रकटयति । वंशस्थवृत्तम् ॥ ३ ॥

**पुत्र** इति । तदीयो बुधस्य पुत्रः सूनुः । बुधापत्यमिति यावत् । भुवने-

जायते स्म जगतीपतिरस्मादायुरायुरसहो विमतानाम् ।
अश्वमेधशतवश्यसुरश्रीरस्य वंशमपुषन्नहुषोऽपि ॥ ५ ॥

[ ययातेरुत्पत्तिः ]

ययातिरस्यात्मभवो बलारिं श्रिया तिरस्कृत्य चिरं विरेजे ।
भयातिरेकक्षुभितः स्म यस्मात् प्रयाति दिक्षु प्रतिपक्षवर्गः ॥६॥

[ तुर्वसुः ]

तुर्वसुर्नाम तत्सूनुर्निर्वसूकृतशात्रवः ।
उर्वरां मणिकेयूरनिर्विशेषमधारयत् ॥ ७ ॥

---

ष्वेकवीरोऽद्वितीयशूरः पुरूरवा नाम भुवं धरणीं शशास पालयामास । उर्वशीं हरति तच्छील उर्वशीहारी, सुराणां जेता जयनशीलः सुरारि-जेता, उर्वशीहारी चासौ सुरारिजेता चेति तेन तादृशेन येन पुरूरवसा भुज-प्रतापः स्वबाहुवीर्यं नाकेऽपि स्वर्गेऽपि प्राकाशि प्रकाशितः। स्वप्रतापवशीकृत-दिगन्तरोऽयमभूदित्यर्थः । उपजातिच्छन्दः ॥४॥

**जायत** इति।विमतानां द्विषतामायुषामसहोऽपहर्ताऽऽयुर्नामको जगतीपति-रस्माद् जज्ञे । तथैवास्य वंशमन्ववायमश्वमेधशतैर्वश्यासुरश्रीर्देवलक्ष्मीर्यस्य स नहुषोऽप्यपुषत् पुपोष वर्धयामासेत्यर्थः । आयुषो नहुषोऽभूदिति यावत् । स्वागता वृत्तम् ॥ ५ ॥

**ययातिरिति** । अस्य नहुषस्यात्मभवस्तनूजः ययातिः तन्नामा श्रिया समृद्धया बलारिं मघवन्तं तिरस्कृत्य चिरं विरेजे शुशुभे।यस्मात् भयातिरेकेण भीत्यतिशयेन क्षुभितः संजातक्षोभः प्रतिपक्षवर्गः शत्रुवृन्दं दिक्षु प्रयाति स्म पलायते स्म । उपेन्द्रवज्राच्छन्दः ॥ ६ ॥

**तुर्वसुरिति** । निर्वसूकृतं शात्रवं शत्रुवर्गो येन स तादृशः, तत्सूनुः तदात्मजः तुर्वसुर्नाम तुर्वसुनामकोऽभूत् । य उर्वरां पृथ्वीं केयूरनिर्विशेषं मणिरत्नाङ्गदवत् अधारयत् दध्रे । भूमिविशेषवचनोऽप्युर्वराशब्द इह शब्दालंकारानुरोधेन सामान्यवचनत्वेनाभिप्रेतः । अनुष्टुप् छन्दः ॥ ७ ॥

[ तिम्मभूपः ]

अनन्यसामान्यगुणादिसान्द्रस्तदन्ववायार्णवपूर्णचन्द्रः ।
कौक्षेयसाक्षीकृतवीरलक्ष्मीकरग्रहोऽभूद् भुवि तिम्मभूपः ॥८॥

[ ईश्वरोद्भवः ]

पुरा हरिं पुत्रमसूत देवकीमुदूह्य कश्चिद् यदुरित्युदारधीः ।
स देवकीनाम्नि परिग्रहे शुभे सुतं प्रसूयेश्वरमत्यशेत तम्॥९॥
विजितपरपुरो वृषाश्रयोऽयं करगतमेव धनञ्जयं विवृण्वन् ।
अवहदनुगतार्थमात्मनाम स्फुरदुरुभूतिरहीनभोगहारी ॥१०॥

---

**अनन्ये**ति । अन्येषु सामान्यं सादृश्यं येषां ते तादृशाः न भवन्तीति अनन्यसामान्यास्ते च ते गुणादयो गुणकर्मयशःप्रतापाद्यास्तैः सान्द्रः निरुपमः गुणगणमण्डित इति यावत्। तदन्ववायः तुर्वसुवंश एव अर्णवः सागरस्तज्जातः पूर्णचन्द्रः पार्वणशशीव । कौक्षेयेणासिना साक्षीकृतः वीरलक्ष्मीकरग्रहो यस्य स तादृशः शूरश्रीपाणिपीडनः । शौर्यशौण्डीर्यपक्षपातित्वं हि श्रिया स्वभाव इति भावः। भुवि तिम्मनामको भूपोऽभूदजायत । उपजातिच्छन्दः ॥ ८ ॥

**पुरे**ति। पुरा यदुरितिख्यातः यदुकुलोत्पन्नः,वसुदेव इत्यर्थः। उदारधीर्मन्देतरमतिःकश्चिद् देवकीमेतन्नाम्नीं सीमन्तिनीमुदूह्य पाणिग्रहणविधिना स्वीकृत्य हरिं श्रीकृष्णाभिधं पुत्रमसूत जनयामास।तद्वत् स तिम्मभूपः देवकीनाम्नि देवकीनामके परिग्रहे भार्यायामीश्वरमेतदभिधं पुत्रमुत्पाद्य तं यदुं वसुदेवमत्यशेत तिरश्चक्रे । वंशस्थवृत्तम् ॥ ९ ॥

**विजिते**ति।विजितानि परेषां शत्रूणां पुराणि येन स तादृशः,(शिवपक्षे—परेषामुत्कृष्टानां पुराणां भेत्ता तस्य पुरारित्वात्)वृषाश्रयः धर्मैकवसतिः(शिवपक्षे—वृषवाहनः तस्य नन्दिवाहनत्वात् ) 'वृषः स्याद्वासवे धर्मे' इत्यमरः । करगतमेव करतलस्थितमेव धनं सम्पदं जयं च विवृण्वन् प्रकाशयन् (शिवपक्षे—करगतमेव वशीकृतमेव धनञ्जयमर्जुनं विशेषेण वृण्वन् भक्तत्वेन स्वीकुर्वन्। 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेरीश्वर-

आर्यां गुणौघैरथ बुक्कमाम्बां स राजमौलिर्विधिनोपयम्य ।
नृसिंहनामानमुदग्रशक्तिर्निबर्हितारं सुषुवे कुमारम् ॥११॥

प्रह्लादमानसहितो नखरात्युदग्र-
विक्रान्तिरश्रमकृतोरुहिरण्यदानः ।

---

नृतेनैवेश्वरस्य प्राप्यत्वात् । स्फुरन्ती उर्वी महती भूतिरैश्वर्यं यस्य स तादृशः, (शिवपक्षे-प्रकाशमानभस्माङ्गरागः) अहीना उत्तमोत्तमा ये भोगा विषयानन्दास्तान् हरति भुङ्क्ते तच्छीलः (शिवपक्षे-अहीनः सर्पाधिपतिर्वासुकिस्तस्य भोगः कायः स एव हारः सोऽस्यास्तीति तादृशः) एवंभूतः सन् स ईश्वरः आत्मनाम स्वकीयमीश्वरेत्यभिधानमनुगतार्थमर्थानुरूपमवहद् धारयामास। ईश्वरशब्दोऽत्र प्रकृतनृपवाची शिववाची च । पुष्पिताग्राच्छन्दः ॥ १० ॥

**आर्यामि**ति।उदग्राः अदम्याः शक्तयः प्रभावोत्साहमन्त्रजाः शक्तयो यस्य स तादृशः। राजमौलिः राजशेखरः स ईश्वरदेवः गुणौघैर्गुणसञ्चयैः(करणैः)आर्यां श्रेष्ठां माननीयां बुक्कमाम्बामेतन्नामिकां रमणीं विधिना सविधि उपयम्य परिणीय नृसिंहनामानं निर्बर्हितारं शत्रुजेतारं कुमारं सुषुवेऽजीजनत् । अत्र राजमौलिपदेन चन्द्रशेखरः शिवः, आर्यापदेन देवी गिरिराजकन्या, कुमारपदेन गुहः, नृसिंहनामकरणेन कुमारस्य विष्णोरंशावतारता च ध्वन्यते । उपजातिवृत्तम् ॥ ११ ॥

नृसिंहाभिधानो नृपतिरभूदित्यनुपदमेवोक्तं तदेव श्लेषमूलाभेदध्वनिना दृढयति—

**प्रह्लादे**ति।यः प्रह्लादमानसहितःप्रकृष्टेन ह्लादेन हर्षेण मानेन गर्वेण कविसामन्तादिकृतेनादरेण वा सहितः(नृसिंहावतारपक्षे-प्रह्लादस्य हिरण्यकशिपोः पुत्रस्य यो मानः, तत्कर्तृकस्तत्कर्मको वा सत्कारस्तत्सहितः। यद्वा प्रह्लादस्य मानसाय हितः हितकारी ) (अ)नखरात्युदग्रविक्रान्तिः अनखरः अकठोरस्तथापि-अत्युदग्रा विक्रान्तिर्यस्य तादृशः । जनेषु कठोरतामकुर्वन्नपि शत्रुषु परमपराक्रमशीलः । ( अवतारपक्षे—नखरैः कररुहैः ' पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् " अत्युदग्रात्युच्छ्रिता विक्रान्ति-

यस्सिंहसंहननतानुसरज्जयश्री-
निष्कण्टकां वसुमतीं निखिलामतानीत् ॥ १२ ॥

यः खलु निरर्गल-जैत्रयात्रा-समुद्धत-पटह-निध्वान-निर्भदित-शिखरि-गर्भ-कुहर-सुख-प्रविष्ट-भुजग-विष्टप-कान्दिशीकानेक-वैरि-वीर-लोकः,

अनेक-विध-निज-भुजापदान-गान-रसैकतान-विमानचर-

---

विक्रमो यस्य तादृशः, अश्रमकृतोरुहिरण्यदानः—अश्रममविरतं कृतम् उरु महत् हिरण्यदानं सुवर्णवितरणं येन स तादृशः, (अवतारपक्षे-अश्रमेणानायासेन कृतं विहितम् उरोर्महतः हिरण्यस्य हिरण्यकशिपोर्दानं खण्डनं ( दोऽवखण्डने ) येन सः ) सिंहसंहननतानुसरज्जयश्रीः—सिंहसंहननतां वराङ्गरूपोपेतताम् ( 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इत्यमरः ) अनुसरन्ती जयश्रीर्विजयलक्ष्मीर्यस्य सः, (अवतारपक्षे-सिंहस्येव संहननमवयवसंनिवेशो यस्य स सिंहसंहननः तस्य भावस्तत्ता, तामनुसरन्ती जयलक्ष्मीर्यस्य सः ) एवंविधो नृसिंहदेवभूपतिर्निखिलां वसुमतीं धरणीं निष्कण्टकामपनीतसपत्नाम् ( अवतारपक्षे—समुद्धतपीडाम् ) अतानीत् व्यधत्त ॥ उपजातिवृत्तम् ॥ राज्ञो नृसिंहदेवस्य नृसिंहावतारेण सहोपमा व्यङ्ग्या ॥१२॥

**य** इति। यः नृसिंहदेवः खलु प्रसिद्धः—अराजीदित्यग्रेणान्वयः। कीदृशः सः इत्याह—**निरर्गले**ति। निरर्गलाऽप्रतिबद्धा या जैत्रस्य शत्रून् प्रत्यलं गन्तुः जेतुः ('जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति' इत्यमरः) यात्रा जैत्रयात्रा तत्र सम्यगुच्चैश्च हता नादिता ये पटहास्तेषां निध्वानाः शब्दास्तैर्निर्भेदिता विदारिता ये शिखरिणामद्रीणां गर्भा मध्यभागाः, तत्र यानि कुहराणि विवराणि ('कुहरं सुषिरं विवरं बिलम्' इत्यमरः ) तैः कृत्वा सुखेन प्रविष्टं भुजगविष्टपं पाताललोको येन तादृशः, कान्दिशीको भयद्रुतोऽनेकारिवैरिवीराणामसंख्यशूरशत्रुयोधानां लोकः समुदायो यस्मात्तादृशः।

**अनेके**ति। अनेकविधं यद् निजस्य नृसिंहदेवस्य भुजयोरपदानं वृत्तं कर्म तस्य

सतान-मान-वीणा-निक्काण-विलीन-मणिसानु-तट-पाषाण-निवह-वहमान-जलभरोपचीयमान-गगनवाहिनी-भय-विरतावगाहन-रुचि-शचीमुख-वरारोहा-जन-कृत-स्वयंग्रहोपगूहन-प्रहृष्ट-त्रिविष्टपाधिपः,

निष्ठुरतर-पट्टिश-विघट्टित-दृढतर-रिपूरः-कवाट-पट्ट-निष्ठ्युत-रुधिर-भर-स्पर्धि-सकुङ्कुम-पङ्क-सात्त्विक-स्वेद-सङ्गर-जय-रमा-समानीयमान-तदीय-राज्यलक्ष्मी-समागमाङ्कुरित-पुलक-

---

यद्गानं तत्र यो रसोऽनुरागस्तदेकतानास्तन्मात्रपरा ये विमानचराः सिद्धादयो देवयोनिविशेषास्तेषां यः तानमानाभ्यां मूर्च्छनालयाभ्यां सहितो वीणानिक्काणः वीणावादनजन्यो निनदस्तच्छ्रवणेन विलीनाः द्रवीभूताः ये मणिसानवो रत्नगिरिशिखराणि तेषां तटे यः पाषाणनिवहः शिलासमुच्चयस्तेन कृत्वा वहमानो यो जलभरो जलसंघस्तेनोपचीयमाना जलातिरेकं भजमाना या गगनवाहिनी स्वर्गसुरवाहिनी तस्याः सकाशात् (तद्वृतं सहसाऽऽगतं जलं दृष्ट्वा) यद् भयं तेन विरतावगाहनरुचिरपगतस्नानेच्छो यो शचीमुख इन्द्राणीप्रभृतिर्वरारोहजनः ललनासमूहस्तेन कृतं यत् स्वयंग्रहेण स्वकर्तृकग्रहणेनोपगूहनमालिङ्गनं तेन प्रहृष्टस्त्रिविष्टपाधिपः स्वर्गलोकाधिपतिरिन्द्रो यस्य तादृशः। स राजा देवेन्द्रस्यापि शच्या स्वयंग्रहाश्लेषेण सुखदायकोऽभूदित्यर्थः।

अत्र रत्नाङ्गदमयूखमालासु राजलक्ष्मीसमागमकालिकपुलकावलितामुत्प्रेक्षते—निष्ठुरतरं दारुणतरं यथा स्यात्तथा पट्टिशेनैतन्नामकेन शस्त्रविशेषेण विघट्टितमास्फालितं यद्दृढतरं रिपूरःकपाटं शत्रुवक्षःस्थलरूपं कपाटं तस्य तदेव वा पट्टं तस्मान्निष्ठ्यूतो निर्गतो रुधिरभरस्तत्स्पर्धी तत्समः सकुङ्कुमपङ्कः काश्मीरजकर्दमसहितः सात्त्विकस्वेदोऽनुरागजन्मः प्रस्वेदो यस्यास्तादृशी, किं च, सङ्गरजयरमा युद्धविजयलक्ष्मीः तया समानीयमाना सहैवानीयमाना, या तदीया शत्रुसम्बन्धिनी राजलक्ष्मीः ( स्त्रीत्वाज्जयलक्ष्मीरूपा चेटी राजलक्ष्मीरूपां महिषीमानयन्ती कुट्टिनीत्वमाचरतीति ध्वनिः ।

संकाश-रत्नाङ्गद-मयूख-रेखा-शृङ्गारित-भुजशृङ्गः,

तुङ्गतर-तुरङ्गम-निरङ्कुश-खर-खुर-शिखर-डम्भक-संघट्टित-विश्वम्भरा-तल-विकस्वर-पांसु-विसर निःशेष-शोषित-सरस्वदन्त-रवसति-सुलभ-कुलिश-धरागम-शङ्कातङ्क-सपत्र-गोत्राधर-वित्रास-समुद्गमोद्यम-सम-समय-समुत्पादित-विभिद्यमान-शात्रव-गात्र-स्रवदस्र-स्रवन्ती-सहस्रः,

---

यद्वा-सखीत्वाज्जयलक्ष्म्यां चलितायां हर्षचरिते सावित्रीव सरस्वत्यां राज-लक्ष्मीरपि प्रस्थितेति व्यज्यते ) तया सह यो नरसिंहदेवस्य समागमस्ते-नाङ्कुरिता ये पुलकास्तत्सङ्काशास्तत्सदृश्यः, तत्स्थानस्थिताः तद्भ्रमकारिण्य इति यावत्, या रत्नाङ्गदमयूखरेखास्ताभिः शृङ्गारिते मण्डिते भुजशृङ्गे बाहुमूले यस्येत्यर्थः ।

तुङ्गतरेति।तुङ्गतरा महाप्रमाणा ये तुरङ्गमा हयास्तेषां निरङ्कुशान्यप्रतिरोध्यानि ( तीक्ष्णत्वात् ) यानि खरखुरशिखराणि तान्येव डम्भका अयःकुश्यस्तैः संघट्टितं विदारितं यद् विश्वम्भरातलं तस्माद् विकस्वरो निःसरन् पांसुविसरो धूलिसमूहस्तेन निःशेषं सम्पूर्णतया यथा स्यात्तथा शोषितं निर्जलीकृतं सरस्वतोऽर्णवस्यान्तरं मध्यभागस्तत्र वसतिर्येषां तादृशाः अत एव च सुलभः कुलिशधरस्य मघवत आगमस्यागमनस्य शङ्कातङ्को येषां तादृशा ये सपत्राः सपक्षाः गोत्राधरा भूधराः (ये मघवता पक्षेषु शात्यमानेषु समुद्रे निलीय तस्थुः ) तेषां यो वित्रासाद्धेतोः समुद्गमस्य ततोऽपक्रमणस्योद्यमो यत्नस्तत्समसमये तदानीमेवेति यावत्, समुत्पादितं, विभिद्यमानानि हन्यमानानि यानि शात्रवाणामरीणां गात्राणि तेभ्यः स्रवन्निश्चोतद्यदस्रं रुधिरं तस्य स्रवन्तीनां नदीनां सहस्रं, येन तादृशः, नरसिंहराजः । स्रवत्स्रवन्तीसहस्रेण युगपदेव शोषितः सागर आपुपूरे, तेन च पूर्ववन्निलीनाः पर्वता मघवदगम्या अपेत-पक्षशातनभयाः सन्तः सुखिनो बभूवुरित्यर्थः ॥

सन्तत-तन्तन्यमान-दान-धाराम्बु-पूर-नदी-मातृकायित-मेदिनी-तलोदार-केदार-विकीर्ण-विद्वेषण-दुर्यशःकरीष-सविशेष-पोषित-निज-कीर्त्युन्मेष-शालि-पालिकायित-मनीषि-मुख-कुटी-निषण्ण-द्रुहिण-योषा-बहुविधोद्घोषणा-निश्शेष-निवारित-परोपमान-भाषण-प्रसङ्ग-सारङ्गः,

---

**सन्ततेति**। सन्ततमनवरतं तन्तन्यमानोऽतिशयेन विस्तार्यमाणो यो दाने विश्राणनासंकल्पावसरे धाराया जलधारायाः करे निषिच्यमानाया अम्बुपूरो जलप्रवाहस्तेन नदीमातृकायितं नद्यम्बुसम्पन्नव्रीहिपालितदेशतुल्यं यन्मेदिनीतलं क्षितितलं तदेवोदारकेदारो विशालं क्षेत्रं ( 'उदारो दातृमहतो-' रित्यमरः ) तत्र विकीर्णं निक्षिप्तं यद् विद्वेषणानां विद्विषां शत्रूणां दुर्यशः-करीषमकीर्तिरूपं शुष्कगोमयं 'खात, इति प्रसिद्धम्, तेन सविशेषं पोषिता ये निजकीर्त्युन्मेषशालयः स्वकीर्तिविकासरूपाः शालयस्तण्डुल-विशेषास्तेषां पालिकायिता पालिकेवाचरन्ती या मनीषिमुखकुट्यां विद्वदानन-कुटीरे निषण्णा द्रुहिणयोषा विधिपत्नी सरस्वती तस्या बहुविधा उद्घोषणा-हरिणवित्रासहेतवः शब्दास्ताभिः निःशेषं निवारिता ये परोपमानभाषण प्रसङ्गरूपाः परैरन्यैरुपमानमुपमितिसंपादनाम्—तत्पूर्वकं यद्भाषणम्—कवीनां निसर्गसिद्धम्—तदवसररूपाः सारङ्गाः कुरङ्गा यस्य स तादृशः। अत्र कविनाऽलौकिकं नागरिकस्पृहणीयं ग्राम्यजीवनमुपवर्णितम्—तत्र क्षेत्रे यथा जलसेकयोग्येषु क्षेत्रेषु करीष ( खात ) पातनं क्रियते, शालयश्चोप्यन्ते, तेषु रूढेषु क्षेत्राधिपाः बालां तनयां तद्रक्षणाय नियुञ्जते, सा च क्षेत्रनिकट-कुट्यामवस्थिता समुपागतान् कुरङ्गान् हू हू-हाहा-रवैर्विद्रावयति, तद्वदेवात्र दानधाराम्बुपूरस्य नदीरूपत्वं, मेदिन्याः केदारत्वे सति नदीमातृकत्वं, दुर्यशसः करीषत्वं, कीर्त्युन्मेषस्य शालितुल्यत्वं, विद्वन्मुखस्य कुटीत्वं, तद्वासिन्याः सरस्वत्याः क्षेत्रपालिकात्वं सतानगीयमान-यशस उद्घोषणारूपत्वं, कविनिसर्गसिद्धस्योपमाप्रयोगस्य च सारङ्गत्व-मुत्प्रेक्षितम्। राज्ञोऽस्य तादृशाभिकर्मणि क्षेत्रात्सदृशोऽन्यः कोपि न संभवतीति

भयङ्कर-भुजदण्ड-प्रचण्ड-मण्डलाग्र-कुण्डलिवराखण्ड-शौण्डीर्य-बहिरकुण्ठिताज्ञाचक्र-परिमण्डल-पालित-विध्यण्ड-भाण्ड-सम्भाण्डित-पाण्डुर-कीर्ति-पूर-सुधासारः,

क्रूरतर-प्रचार-निरवशेष-हारित-सर्व-दुर्विनीत गर्व-रस-दुर्वार-निज-पौरुष-कठोर कर-कारित-बहुप्रकार-वैरि-वारिज-

---

तात्पर्यम् । इयं सरस्वती विधेः पत्नी पुत्री चेत्युभयथा वर्णिता । तदुक्तं लघुशब्देन्दुशेखरटीकायां श्रैधर्यां मङ्गलाचरणपद्ये—" विधेश्च पत्नी कमलासनप्रिया सरस्वती नृत्यतु वाचि मे सदा " इति ।

**भयङ्करेति**। भयङ्करो यो भुजदण्डः,यश्च प्रचण्डो मण्डलाग्रः करवालस्तावेव कुण्डलिवरौ नागाधिपौ तयोरखण्डं यत् शौण्डीर्यं पराक्रमस्तस्माद्धेतोरेव तयोर्बहिरकुण्ठितं यदाज्ञाचक्रं निदेशस्तस्य परिमण्डलेन परिधिना पालितो रक्षितो यो विध्यण्डभाण्डे ब्रह्माण्डपात्रे सम्भाण्डितोऽवस्थितः पाण्डुरः कीर्तिपूर एव धवलयशोराशिरेव सुधासारोऽमृतनिकरो यस्य सः । योगशास्त्रे हि मूलाधारचक्रम्, स्वाधिष्ठानचक्रम्, मणिपूरकचक्रम्,: अनाहतचक्रम्, विशुद्धचक्रम्, आज्ञाचक्रमिति षट्चक्राणि, मेरुदण्डसूत्रे प्रोतानि षट् कमलानि निरूपितानि । क्रमशश्चेमानि—शिश्नपाय्वन्तराले, लिङ्गसम्मुखे मेरुदण्डे, नाभिप्रदेशे, हृदये, कण्ठे, भ्रमध्ये च वर्तन्ते, सन्ति चेमानि क्रमश एव पृथिवी-जल-वह्नि-वायु-नभो-विद्युतां द्योतकानि । ततश्चैतेषां सर्वेषामुपरि सहस्रारचक्रं वर्तते यत्र परमशिवोऽवतिष्ठते, प्रकृतं चाज्ञाचक्रं भ्रमध्योपलक्षिते मेरुदण्डे ब्रह्मनाड्यां स्थितमस्ति, अस्य च बीजं प्रणवः महत्तत्वस्य चेदं स्थानम्, बीजस्य वाहनं च नादो बिन्दुश्चोपरि वर्तते तत्रैव तालुमूले स्थितममृतम्, तदाज्ञाचक्रेण पाल्यते । एतदमृतमहाभाण्डं च कुण्डलिभ्यां सुरक्षितं तिष्ठतीति निगूढं रहस्यमत्र व्यञ्जितम् । विस्तरस्त्वाकरेभ्योऽनुसंधेयः ।

**क्रूरतरेति** । क्रूरतरः प्रचारो गमागमो व्यवहारश्च यस्यैवंविधो निरवशेषतया साकल्येन हारितोऽपनीत आत्मसात्कृतश्च दुर्विनीतानामुद्दण्डानामरीणां गर्वो दर्प एव रसो जलं येन तादृशं निजपौरुषमात्मपौरुषमेव

मुखीजन नयन-घन-धाराल-बाष्प-पूर-दूर-निवारित-पर-धरणी-पाल-विमल-यशोजाल-जालपाद-संचारः,

पाताल-प्रविष्ट-दुष्ट-रिपु-दुरभिमान-भूदारा-दृष्ट-मूल-विस्पष्टतर-विजृम्भित-प्रतापानल-स्तम्भ-शिखर-विचयन-ससम्भ्रम-विमल-कीर्ति-कदम्ब-कादम्ब-विलङ्घित-ब्रह्माण्ड-मण्डलः,

निर्वर्तित-समस्त-भुवन-सौहित्य-निरत्यय-निज-त्याग-निरुपयुक्त-वृत्रवैरि-सौरभेयी-प्रस्नुतापीन-नित्य-प्रवर्तमान-दुग्ध-

---

कठोरकरश्चण्डरश्मिः सूर्य इति यावत् तेन कारितो निर्मितो यो बहुप्रकारो नानाविधो वैरिवारिजमुखीजनानां शत्रुविलासिनीनां नयनघनैर्नेत्रपयोदैर्धारालो धारारूपेण वहमानो बाष्पपूरोऽश्रुप्रवाहः धारासम्पातपतद्वारिधरधारौघतुल्यः, दूरनिवारितो दूरमुत्सारितः, परधरणीपालानां शत्रुभूपतीनां विमलं यशोजालमेव कीर्तिनिकर एव जालपादो मरालस्तस्य संचारः प्रचारो येन स तादृशः। सूर्यो हि भगवान् रसमपहरति, वर्षति च । अस्य पौरुषरूपेण सूर्येणापि वैरिणां गर्वरसो हृतः, तन्नारीनयनाम्बुपूरश्च वर्षितः वर्षासु च हंसा न सञ्चरन्ति । तदत्रापि वैरिपत्तो हंसो न सञ्चरतीति भावः ।

पातालं प्रविष्टः, अत एव दुष्टरिपूणां शत्रुहतकानां दुरभिमान एव भूदारः सूकरस्तेन न दृष्टं मूलं यस्य तादृशः, ( मूलोत्खननं हि कोलानां स्वभावः ) यो विस्पष्टतरमतिस्पष्टं विजृम्भितः समुद्गतः प्रतापानलस्तम्भः स्तम्भाकारः प्रज्वलन् प्रतापवन्हिस्तस्य शिखरस्य विचयने गवेषणे ससंभ्रमः संवेगवान् विमलायाः कीर्तेः कदम्बः समुदाय एव कादम्बो मरालविशेषस्तेन प्रयोज्यकर्त्रा विलङ्घितं लङ्घनविषयतां प्रापितम् ( णिजन्तरूपम् ) ब्रह्मण्डमण्डलं भूमण्डलं भूवलयं वा येन स तादृशः । अस्य प्रतापः शत्रुभिरपरिच्छेद्यः, कीर्तिश्च ब्रह्माण्डव्याप्तेति तात्पर्यम् ।

निर्वर्तितं सम्पादितं सकलभुवनस्य सम्पूर्णभूमण्डलस्य सौहित्यं तृप्तिर्येन तादृशः निरत्ययं दिवानिशं यो निजः स्वीयो नरसिंहराजसम्बन्धी त्यागः,

पूर-बहु-मुख-प्रवाह-संपृक्ति-व्यक्तीकृत-दिविषत्तरङ्गिणी-क्षीराब्धि-महिषीत्वपद-महौचित्यः,

तीक्ष्णतर-प्रक्ष्वेडन-विक्षत-विपक्ष-वक्षोगवाक्ष-विनिर्गच्छदसु-पवन-निवारित-वीरलक्ष्मी-सरभसागमन-श्रमः,

दर्वीकर-सार्वभौम-धूर्वह-भुजशिखर-निर्विष्ट-सर्वंसहः, महाम्भोराशि-गम्भीराशय-निवासि-वासुदेवः, विकचारविन्द-बन्धुवर-विलोचन-विहरदिन्दिरः, सत्यानुसक्त-रसना-

---

तेन निरुपयुक्ताऽनुपयोगिनी या वृत्रवैरिणो मघवतः सौरभेयी कामधेनुः, तस्याः प्रस्नुतं क्षरत् आपीनमूधस्ततो नित्यं प्रवर्तमानाऽनारतं वहन् यो दुग्धपूरः पयःप्रवाहस्तस्य संपृक्तिः संपर्को मेलनं तेन व्यक्तीकृतं प्रकटितम्, दिविषत्तरङ्गिण्याः सुरधुन्याः यत् क्षीराब्धेर्दुग्धमहार्णवस्य महिषीत्वपदम्, कृताभिषेकराज्ञीपदम्, तस्य महौचित्यमतियोग्यत्वं येन तादृशः। शुक्लो वर्णेन दुग्धाब्धिस्तत्पत्न्या सुरसरिताऽपि तद्वर्णयैव भाव्यमित्येतत् कामधेनुपयसाऽन्यत्रानुपयुक्ततां नीतेन प्रवहता गङ्गासङ्गतेन सम्पादितम् इति तात्पर्यम्।

तीक्ष्णतरं तीव्रतरं यत् प्रक्ष्वेडनं सिंहगर्जनं तेन विक्षतं विदीर्णं यद्विपक्षाणां शत्रूणां वक्ष उरस्थलम् (विदीर्णत्वेन छिद्रवत्तया तदेव गवाक्षं तस्माद्विनिर्गच्छन्तो निर्यन्तो येऽसुपवनाः प्राणवायवस्तैर्निवारितो वीरलक्ष्म्याः जयलक्ष्म्याः सरभसं सवेगं यथा स्यात्तथा गमनस्य श्रमो येन तादृशः। कोमलतन्वङ्ग्या जयलक्ष्म्याः प्राणवायुसंघट्टेन गमनश्रमोऽपनीत इति भावः।

दर्वीकराः सर्पास्तेषां सार्वभौमोऽधीश्वरः शेषस्तस्य धूर्वहौ कार्यसंपादकौ समानाविति यावद्, यौ भुजौ बाहू तयोः शिखरे निर्विष्टा धृता सर्वंसहा भूतधात्री येन तादृशः (भुजेऽदसीये शेषे वा धृता विश्वम्भरा समेति भावः) **महाम्भोराशी**ति—महाम्भोराशिवद् गम्भीरे आशये हृदि निवासी वासुदेवो यस्य तादृशः। 'वासुदेवनिवासोऽभूत् सागरो वाऽस्य वाशयः' इत्यर्थः। विकचं विकसितं यदरविन्दं नीलोत्पलं तद्बन्धुवरे

चत्वर-विहारि-शारदः, सञ्चरिष्णुरिव काञ्चनाचलः, सकल-कला-कलाप सन्तत-सान्द्र इव चन्द्रमाः, कल्पितचेतन इव कल्पपादपः, पुनरुत्पन्नमूर्तिरिव पुष्पसायकः, कृतवीर्य-धुर्य-समर विहृतिरर्जुन कीर्ति-समुज्ज्वलः, भीमनिस्सीमबलोदग्रः, विक्रमाङ्कसाहसः, वीरसेनाभिरामविभवः, पृथुप्रथित-

---

तत्सदृशे ये विलोचने नेत्रे तत्र विहरन्ती इन्दिरा लक्ष्मीर्यस्य स तादृशः । ' फुल्लेरविन्दे राज्ञश्च नेत्रे व्यहरदिन्दिरा ।' इत्यर्थः । राज्ञो दृष्टिपातसमकालमेव लक्ष्म्यास्तत्रोपस्थितिरित्याकूतम् । सत्ये सत्यभाषणेऽनुसक्ताऽनुबद्धा या रसना जिह्वा सैव चत्वरमजिरं तत्र विहारिणी विहरणशीला शारदा यस्य तादृशः । ' रसनाङ्गणनर्तित्वं चक्रेऽमुष्य सरस्वतीत्यर्थः' । सञ्चरिष्णुः संचरणशीलकाञ्चनाचलो मेरुरिव, भास्वरत्वादापादमस्तकाचितसर्वाङ्गणिभूषणत्वाच्च । सकलायाः कलाश्चतुःषष्टिकलाः षोडशकलाश्च तासां कलापः समुदायस्तेन सन्ततं सान्द्रो घनीभूतश्चन्द्रमा इव, कलाश्लेषसाम्यात्, यशोराशिव्याप्तदिगन्तरत्वाच्च । कल्पिता प्रकल्पिता, सम्पादितेतियावत् चेतना चैतन्यं यस्मिस्तादृशः कल्पपादप इव कल्पवृक्ष इव । दानाञ्चितकरशाखावत्त्वात् । पुनरुत्पन्ना मूर्तिर्यस्य तादृशः पुष्पसायक इव मदन इव रुचिराकारत्वात् । सम्प्रति पूर्वराजरूपत्वं नरसिंहदेवस्योत्प्रेक्षते तत्तन्नामश्लेषसाम्यात्-कृता वीर्यधुर्याणां—पराक्रमशालिनां शत्रूणां समरे विहृतिर्येन तादृशः, महाबाहुभिरपि रणे समुपस्थितेऽन्तःपुरवद्विहरति स्मेत्यर्थः । पक्षे—कृतवीर्यः सहस्रार्जुनस्य जनकस्तस्यधुर्यस्तद्वंशनायकत्वात्—तद्धूर्वहो यस्तत्पुत्रः सहस्रबाहुस्तद्वत्समरे विहृतिर्यस्येत्यर्थः अर्जुना धवला या कीर्तिस्तया समुज्ज्वलः ( ' वलक्षोधवलोर्जुन' इत्यमरः ) । अर्जुनो मध्यमपाण्डवस्तस्येव कीर्त्या समुज्ज्वलः प्रकाशमानः । भीमं भयप्रदं निःसीमं निरवधि च यद्बलं तेनोदग्रः समन्ततः भीमवद् द्वितीयपार्थवद् निस्सीमबलेनोदग्रश्च । विक्रमस्य पराक्रमस्याङ्कश्चिह्नं यत्र तादृशं साहसमुत्साहो यस्य

नीतिः, धर्मनिर्मलहृदयः, भीष्मदुरापचापचातुर्यः, रामाभिरामरामणीयकः, जनकानुकूलशीलः, कलानिधिरिव कमलाश्रयः, धर्मभानुरिव निर्मितशार्वतिमिरासनः, कनकाचल इव कल्पितविधुरविप्रदक्षिणः, शौरिरिव सदानवजयोद्यमः, शङ्कर इव समुन्नतराजताचलस्थितिः, निदाघसमय

---

तादृशः, विक्रमाङ्कदेववत् बिल्हणवर्णितकाश्मीरीयराजवत् साहसं यस्य तादृशश्च। वीराणां सेना वीरसेना तयाऽभिरामो विभवो यस्य तादृशः। वीरसेनवद् अभिरामो विभवो यस्येत्यर्थश्च। पृथ्वी प्रथिता नीतिर्यस्य स तादृशः। पृथुराजवत् प्रथितनीतिश्च। धर्मेण धर्माचरणेन निर्मलं हृदयं यस्य सः। नामैकदेशग्रहणेन तदवतारत्वाद्वा धर्मराजयुधिष्ठिरवन्निर्मलहृदयश्च। भीष्मं दुरापं च चापे धनुर्विद्यायां चातुर्यं यस्येत्यर्थः, भीष्मपितामहवद्दुरापं चापचातुर्यं यस्य तादृशश्च। रामाणां विलासिनीनामभिरामं मनोहरं रामणीयकं यस्य तादृशः। रामवद् दाशरथिवद् अभिरामरामणीयकश्च। जनकस्य पितुरनुकूलमनुगुणं शीलं यस्य तादृशः। जनकस्य विदेहराजस्य अनुकूलं सदृशं शीलं स्वभाव आचारो वा यस्य तादृशश्च। कलानिधिरिव सुधाकर इव कमलाया आश्रयो निवासमन्दिरम्, (चन्द्रपक्षे—कमलस्य हरिणस्याश्रयः। 'स्यात्कुरङ्गेऽपि कमले' इत्यमरः।) धर्मभानुरिव भास्कर इव निर्मितशार्वरतिमिरासनः शार्वरतिश्च मिरासनं च शार्वरतिमिरासने निर्मिते शार्वरतिमिरासने येन तादृशः। शार्वी शिवसम्बन्धिनी रतिः प्रीतिः, रलयोरभेदान्मिलेभ्यो मित्रेभ्य आसनम् आसनादिना सत्कारः द्विरदस्कन्धारोहश्च। 'आसनं द्विरदस्कन्धे पीठे यात्रानिवर्तने' इति मेदिनी, (सूर्यपक्षे-निर्मितं शार्वरस्य तिमिरस्यासनं क्षेपणं येन तादृशः।) कनकाचल इव सुमेरुरिव कल्पिता विधुरेभ्यो विप्रेभ्यश्च दक्षिणा येन तादृशः,(सुमेरुस्तु कल्पिता विधुरविभ्यां प्रदक्षिणा यस्य तादृशः। शौरिरिव कृष्ण इव सदा नवे जये उद्यमो यस्य तादृशः,(कृष्णपक्षे—दानवसहितानां सर्वेषामरीणां जये उद्यमो यस्य तादृशः।) शङ्कर इव समुन्न-

इव नित्यसमग्रार्यमहितः, तपोधन इव नियतशमिताहित-वृत्तिः, शारदारम्भ इवास्तोककान्तरचितरुचिः, ऐरावत-दन्तमण्डल इवाकुण्ठितचतुरश्रीकृतकान्तिः वारिराशिरिव वाहिनीशतानुगतः, विलसत्तरवारिधारोऽपि विजृम्भितप्रतापः,

---

तानां राजा समुन्नतराजस्तस्य भावस्तत्ता तयाऽचला स्थितिर्यस्य स तादृशः, यद्वा समुन्नता राजता राजभावः,तयाऽचला स्थितिर्यस्येति सः,(शिवपक्षे–समुन्नतो यो राजताचलः कैलासाद्रिस्तत्र स्थितिर्यस्य तादृशः।) निदाघसमय इव नित्यं समग्रैरार्यैर्महितः पूजितः, (ग्रीष्मकालपक्षे —नित्यं समग्रः पूर्णतापो योऽर्यमा तस्मै हितो हितकारी।) तपोधन इव नियतं नियमेन शमिताऽहितानां शत्रूणां वृत्तिर्व्यापारो येन तादृशः, (तपोधनपक्षे–नियतो नियमवान्, शमिता अहितानां शत्रूणानां कामक्रोधादीनां वृत्तिः व्यापारो येन तादृशः।) शारदारम्भ इव अस्तोका बहुला ये कान्ताः कान्तपदार्थाः स्वर्णाभरणादय-स्तै रचिता रुचिर्यस्य तादृशः, ( शारदारम्भपक्षे - न स्तोककानां चातकाना-मन्तरे मनसि चिता संपादिता रुचिर्येन तादृशः, शरदारम्भस्य चातकानां विनाशहेतुत्वात् यद्वा अस्तोका महती कान्तानां जलाशयप्रान्तभागानां रुचिः कान्तिर्यस्मिंस्तादृशः ), नञघटितपाठपक्षे तु–स्तोककान्ते चातकविनाशे रचितरुचिरित्यर्थः,(राजपक्षे च स्तोककान्तेषु अल्परम्येष्वपि, बाह्याडम्बर-युतेषु पदार्थेषु रचितरुचिरित्यर्थः।) ऐरावतदन्तमण्डल इव–अकुण्ठिता प्रतिभावन्तो ये चतुरा विद्वांसः श्रीश्च ताभ्यां कृता संपादिता कान्तिः शोभा यस्य तादृशः–सरस्वतीकमलाभ्यामुपासित इत्यर्थः, यद्वाऽकुण्ठिता चतुरा प्रत्यक्षा च या श्रीस्तया कान्तिर्यस्य ( 'चतुरो नेत्रगोचरे' इति मेदिनी ), (ऐरावतपक्षे–न कुण्ठितोऽकुण्ठितः चतुर्णामस्राणां प्रान्तानां समाहार-श्चतुरस्री तया कृता कान्तिः शोभा यस्येत्यर्थः, अनुप्रासमार्गे सशषा-णामभेदस्य प्रतिपन्नत्वात् ।) वारिराशिः समुद्र इव वाहिन्यः सेना-स्तासां शतं तेनानुगत इत्यर्थः, (समुद्रपक्षे वाहिन्यस्तरङ्गिण्य इत्येतावान्विशेषः ।) एवं चन्द्रादीनां राजनि साम्यमारोप्य तं विरोधा-

वितरणोज्ज्वलवृत्तिरप्यवितरणोज्ज्वलवृत्तिः, अजनार्दनोप्यनन्तभोगाश्रयः, सर्वज्ञोऽपि सत्यरुचिरराजीत्।

सत्येतररसानभिज्ञरसज्ञे शक्तित्रयोपयुक्तयुक्तियुक्ते, षाड्गुण्यप्रयोगयोग्यविचारे, निरपायचतुरुपायगोपायितरि यस्मिन् विस्मयनीतिमति परिपालयति वसुमतीम्, भङ्गस्तरङ्गमालिनि,

---

भासेनोपश्लोकयति —अतिशयेन विलसन्तीति विलसत्तरा वारिधारा यत्र तादृशोऽपि विजृम्भितः प्रकृष्टस्तापो यस्य तादृशः, नहि संभवति वारिधाराधरस्य प्रकृष्टतापावलिमण्डितत्वमिति विरोधः—विलसन्ती तरवारेः करवालस्य धारा यस्य विजृम्भितश्च प्रताप ऐश्वर्यं यस्येति तु तत्परिहारः। वितरणेनोज्ज्वला वृत्तिर्यस्य तादृशः सन्नपि तादृशो नभवतीत्यवितरणोज्ज्वलवृत्तिरिति स्पष्टो विरोधः,—अविता पालिता रणे उज्ज्वला वृत्तिर्व्यवहारो येन तादृश इति तत् परिहारः। अनन्तः शेषाहिस्तस्य भोगः कायस्तदाश्रयः सन्नपि जनार्दनो विष्णुर्न भवतीति तादृश इति स्पष्टो विरोधः—विष्णोः शेषशायितायाः प्रसिद्धत्वात्—जनार्दनशब्दस्य यौगिकार्थमादाय परिहारः। जनानामर्दयिता पीडयिता नभवतीति,अनन्तानां भोगानां वैषयिकसुखानामाश्रय इति च तत्परिहारः। सर्वज्ञः शिवः सन्नपि सत्यां दाक्षायण्यामेतन्नामिकायां नास्ति रुचिरनुरागो यस्येति विरोधः। शिवस्य सत्यनुरक्तत्वात्,सर्ववेत्ता भवन्नपि सत्ये रुचिर्यस्येति च तत्परिहारः। एतादृशः स राजा अराजीत् शुशुभे।

**सत्येतरे**ति।सत्यादितरस्मिन्नसत्यभाषणे रसो रागस्तस्यानभिज्ञा रसज्ञा जिह्वा यस्य तादृशे असत्यभाषणात्सदा विमुखे,—शक्तीनां प्रभावोत्साहमन्त्रजानां त्रयं तत्रोपयुक्ता या युक्तिः प्रकारस्तेन युक्ते संवलिते,सन्धिविग्रहादयः षड्गुणा एव षाड्गुण्यं तस्य प्रयोगे योग्यो विचारो यस्य तस्मिन्। अपायात् हानेर्निर्गता इति निरपाया हानिविरहिता ये चत्वारः सामादय उपायास्तेषां गोपायिता रक्षकस्तस्मिँस्तादृशे। स्मयो गर्वो विगतो यस्मात्स विस्मयः, विस्मयश्चासौ नीतिमाँश्चेति तादृशे। यस्मिन् राजनि वसुमतीं धरणीं परिपालयति रक्षति सति।

परार्थाभिलाषः सुकवित्वशालिनि, सन्मार्गलङ्घनं चन्द्रमसि, विषमवृत्तक्रमश्छन्दसि, पक्षपातः पतङ्गेषु, प्रमत्तता मातङ्गेषु, समुत्तरलता हारेषु, सदैन्यालापः प्रणयकुपितदारेषु, बाणपातः शरद्दिवसेषु, अर्तियोगः शरासनेषु, मित्रद्वेषः कुमुदिनीषु, मूर्च्छना परिवादिनीषु, कार्कश्यं

---

परिसंख्यया वर्णयति—भङ्गः कल्लोलजालं तरङ्गमालिनि समुद्र एवाभूत्, अन्यत्र कुत्रापि भङ्गः पराजयो नाभूत्। परा उत्कृष्टा येऽर्थाः वाच्यानि तेषामभिलाषः सुकवित्वशालिनि कविराज एवाभवत् यतः कवयः परस्योत्कर्षजुषोऽर्थस्य शब्दवाच्यस्य जिघृक्षवो भवन्ति; प्रजावर्गे तु कस्यापि परार्थस्य परधनस्याभिलाषो नाभूत्। सतो मार्गस्य मृगशिरआख्यनक्षत्रस्य लङ्घनं चन्द्रमसि शशिनि परमासीत्, तस्य सर्वनक्षत्रचारित्वेन मृगशीर्षनक्षत्रलङ्घकत्वात्; प्रजासु कश्चिदपि सन्मार्गलङ्घनं नाकार्षीत्। विषमवृत्तानां क्रमश्छन्दसि छन्दःशास्त्र एव परमासीत् तत्र समविषमोभयविधच्छन्दसां निरूपणात्, प्रजावर्गे क्वचिद् विषमवृत्तस्य क्रूरव्यवहारस्य क्रमो नासीत्। पक्षपातः पतङ्गेषु पक्षिष्वेवासीत् तेषां पक्षाणां गरुतां पतनात्, अन्यत्र पक्षपातः सहायनाशो दोषे सत्यप्यदण्डयतारूपो वा पक्षपातः क्वचिदपि नासीत्। प्रमत्तता मातङ्गेषु करिष्वेवासीत् तेषां मदस्य प्रशस्तत्वात्। अन्यः कोऽपि मदकलो नासीत्, समुत्तरलता सम्यगुत्कृष्टस्तरलो येषु तेषां भावस्तत्ता उत्कृष्टहारमध्यमणिवत्ता ('तरलो हारमध्यम' इति कोशः) हारेषु केवलमासीत्। नान्यः कोऽपि समुत्तरलः चपलोऽभूत्। सदैन्यो दीनतापूर्ण आलापः सम्भाषणं प्रणये प्रेम्णि कुपितेषु दारेष्वेवासीत्, अन्यः कोऽपि दैन्यवचो न प्रायुङ्क्त। बाणपातः शराख्यतृणविशेषनाशः शरद् दिवसेष्वेवासीत्, अन्यस्तु बाणपातविषयः कोऽपि नाभूत् प्रतिपक्षशून्यत्वात्। अर्तेर्धनुष्कोटेर्योगः सम्बन्धो धनुष्ष्वेवासीत्, अन्यः कोऽपि पीडायोगी नासीत्। मित्रेण सूर्येण सह द्वेषः कुमुदिनीष्वेवाभवत्, सा सूर्योदये मीलति। अन्यः कोऽपि मित्रद्रोही सुहृद्वैरी नाभूत्, मूर्च्छना स्वरारोहावरोहादिः, परिवादिनीषु

करिकरेषु, आरूढपतनमद्रिशिखरनिर्झरेषु, अगतिकत्वमनोकहेषु, अरि(लि)कुलाक्रमणमम्भोरुहेषु, शृंखलाबन्धः प्रबन्धेषु, विरोधप्रसंगोऽलङ्कारग्रन्थेषु, प्रधनमुक्तपरिवारिता कृपाणेषु, मार्गणपराङ्मुखता तूणेषु, परदूषणच्छलमायावादनिग्रह-

---

वीणास्वेवासीत्, अन्यः कोऽपि प्रियविप्रयोगादिना मूर्च्छनां मूर्च्छां नाश्रयत्। कार्कश्यं कठोरता करिकरेषु हस्तिशुण्डादण्डेष्वेवाभवत्; अन्यः कोऽपि कर्कशः कठोरवाङ् नासीत्। आरूढस्योच्चैःस्थितस्य पतनमद्रिशिखरात् पतनशीलेषु निर्झरेषु प्रस्रवणेष्वेवासीत्, अन्यः कोऽपि उच्चपदमुच्चाश्रमं वारूढो पतनं न प्राप्नोत्। संन्यासिनां पुनर्गृहाश्रमप्रवेश आरूढपतनं परिभाष्यते तस्य निषेधः। अगतिकत्वं स्थावरत्वमनोकहेषु वृक्षेषु केवलमासीत्; अन्यः कोप्यगतिकः आश्रयशून्यो लक्ष्यशून्यो वा नासीत्। सर्वोऽपि गतिमान् आश्रयवान् खञ्जेतरो वाऽऽसीत्प्रजासु। अलि(रि)कुलस्य भ्रमरभरस्य क्रमणमम्भोरुहेषु पद्मेष्वेवासीत्, नान्यत्रारिकुलाक्रमणमभूदित्यर्थः (रलयोर्डलयोरलङ्कारमार्गेऽभेदात्) शृङ्खलाया बन्धः प्रबन्धेषु महाकाव्यादिष्वेवासीत्,चित्रकाव्येषु शृङ्खलाबन्धस्यापि गणनात्। अन्यः कोऽपि निगडबन्धनं नाशिश्रियत्, पापाभावात्। विरोधस्यालङ्कारविशेषस्य प्रसङ्गोऽलङ्कारग्रन्थेष्वेव केवलमभूत्, अन्यत्र क्वचित् परिवारे विरोधप्रसङ्गो वैरावसरो नाभूत्। प्रकृष्टं महद् धनं प्रधनं प्रचुरवित्तं तेन मुक्तो रहितो यः परिवारी गृही तस्य भावस्तत्ता सा क्वचित्प्रजासु नादृश्यत, सर्वस्यापि गृहिणः प्रभूतधनत्वात्, केवलं कृपाणेषु असिलतास्वेवासीत्, तेषामेव प्रधने मुक्ताः परितो वारिणः अस्यादयः कोशा यैस्तथाभूत्वात्। मार्गणेभ्यो याचकेभ्यः। पराङ्मुखता व्यावृत्तवदनता क्वचिदप्यन्यत्र नासीत्–सर्वेऽपि याचकान् सत्कुर्वन्ति स्म। केवलं सा तूणेषु तूणीरेष्वेवासीत्, तेषु मार्गणानां शराणामधोमुखीकृत्यावस्थापनात्। परस्य प्रतिवादिनो दूषणं दोषोद्भावनम्,। छलं त्रिविधच्छलं न्यायदर्शनप्रसिद्धं वचसामन्यथा योजनम्, मायावादः श्रीमच्छङ्कराचार्यमतस्थापनं, निग्रहस्थानं प्रतिवादिपराजयो न्यायप्रसिद्धः,

स्थानानि शास्त्रमार्गेषु, कौटिल्यचाञ्चल्यरागादियोगकाठिन्यशून्य-भावाः कान्ताजनकुन्तलनयनाञ्चलाधरदलकुचयुग्मावलग्नेषु च विरेजिरे ।

यस्य प्रतापशिखिविद्रुतकाञ्चनाद्रि-
सान्द्रप्रवाहशतचन्द्रकितः पयोधिः ।
मह्याः प्रधानमहिषीपदवावदूकं
चामीकराङ्कितमिवाम्बरमाबभासे ।। १३ ।।

---

एतत्सर्वं शास्त्रमार्गेषु शास्त्रीयप्रस्थानेष्वेवासीत् । प्रजासु परनिन्दा, कपट-व्यवहारेः, वञ्चुकत्वमिति यावत् , मायावादो मिथ्याभाषणं, निग्रहस्थानं कारावासनिवासश्च नाभूत् । कौटिल्यं वक्रभावः, चाञ्चल्यं तरलता, रागादि-योगः रक्तवर्णस्यादित आरम्भात् संबन्धः, कठिनता कठोरता, शून्यभावः तुच्छत्वम् । अदृश्यत्वमितियावत् ते यथासंख्यं कान्ताजनानां कुन्तलेषु केशेषु ( कौटिल्यम् ) नयनाञ्चलेषु कटाक्षेषु ( चाञ्चल्यम् ) अधरदले-ष्वधरोष्ठपुटेषु च ( रागादियोगः )(अधरोष्ठेषु रागस्य स्वाभाविकारुण्यस्य योगोऽदृश्यतेत्यर्थः ) कुचयुग्मे स्तनद्वन्द्वे (कठोरता) अवलग्नेषु ( ' मध्यमं चावलग्नं च मध्योऽस्त्री'त्यमरः ) ( शून्यता, तनुमध्यत्वात्तासाम् ) चेति विरेजिरे बभूवुर्नान्यत्र कुत्रापि प्रजासु राज्ये वा कुटिलत्वादीनि बभूवुरिति यथासंख्यानुप्राणिता परिसंख्या ।

**यस्ये**ति । यस्य प्रतापः प्रभावः('स प्रभावः प्रतापश्च यत्तेजः कोशदण्डज'मित्य-मरः) स एव शिखी वन्हिस्तेन विद्रुतो द्रवीभावं गतो यः काञ्चनाद्रिः सुमेरु-स्तस्य सान्द्राः सघना ये प्रवाहाः तेषां यच्छतं तेन चन्द्रकितः स्थले स्थले मयूरपिच्छाभचन्द्रिकावान् वर्तुलचामीकराकारैस्तैः पयोधिः पदे पदेऽङ्कित-त्वात्, जलसंयोगे हि द्रुतं वस्तु घनीभावमापद्यते, स पयोधिः मह्याः पृथिव्याः यत् प्रधानमहिषीपदं मुख्यराज्ञीपदं तस्य वावदूकं वदनशीलं सत् चामीकरचन्द्रिकाभिरङ्कितं चिन्हितमम्बरमिव नीलाम्बरमिवाबभासेऽभासिष्ट ।

प्रत्यर्थिक्षितिपा यदाहवभुवः प्रद्रुत्य भीत्यावनी-

कुञ्जे गूढतराः क्षणं श्रमवहत्क्रूरोष्णनिश्वासतः।

शीर्णेऽस्मिन् परिशुष्य भूधरदरीभाजः स्ववामभ्रुवां

दीप्तिव्यक्तदिशो दृशः पिदधते क्रीडाच्छलात्पाणिभिः॥१४॥

अद्वैतशास्त्राधिगमेन सम्यग्विद्यामिवासाद्य विवृद्धसत्त्वः।

---

प्रधानमहिषी हि चामीकराङ्कितमम्बरमभिधत्त। सागराम्बरायाः धरायाः पतिरभून्नरसिंहदेव इति भावः। वसन्ततिलकं वृत्तम्॥ १३॥

**प्रत्यर्थी**ति—प्रत्यर्थिनश्च ते क्षितिपा इति प्रत्यर्थिक्षितिपाः शत्रुभूपा यस्य नरसिंहदेवस्याहवभुवः रणस्थलात्प्रद्रुत्य पलाय्य भीत्या वन्याः घनाटव्याः कुञ्जे निकुञ्जे क्षणं क्षणमात्रं गूढतराः निलीनाः जाता इति शेषः। अथ श्रमेण पलायनश्रमेण वहन् चलन् यः क्रूरो निर्दयो महानिति यावत्, तादृशश्च उष्णश्च यो निःश्वासस्तस्मात् कारणभूतात् परिशुष्य शुष्कतामापद्य शीर्णे पतितपर्णेऽस्मिन् कुञ्जे सति भूधरस्य महीध्रस्य दरी नितम्बदेशस्तां भजन्ति श्रयन्तीति तच्छीलाः जाताः। तत्रापि स्ववामभ्रुवां स्वमहिलानां दीप्त्या कान्त्या व्यक्ता प्रकटीकृता दिग् देशो येषां तादृशाः सन्तः (अत्र नित्यसाकाङ्क्षत्वात्समासः) तासां स्ववामभ्रुवां दृशो नेत्राणि क्रीडाच्छलात् खेलव्याजात् पिदधते आच्छादयन्तीत्यर्थः। अयम्भावः—नरसिंहदेवशत्रवो भीत्या कुञ्जे गताः, कुञ्जस्तदुष्णनिःश्वासैर्मुर्मुरायितः सन् क्षणादपेतपत्रतामापद्य तेषां निलायनासमर्थोऽभूत् तं विहाय ते भूधरदरीमात्मानं गोपायितुं गतास्तत्रापि यदा स्वस्त्रीणां मुखकान्त्याऽन्धकारो विद्रावितस्तदा स्त्रियस्तासां तावद् हृदयदौर्बल्यं मा नाम ज्ञासिषुरिति धिया क्रीडाव्याजेन तासां चक्षूंषि पिदधुर्येन कान्तिमन्दीभावात् तमस्तिरस्करणाभावेन ते तत्र सुखं निलीनास्तिष्ठेयुः। शार्दूलविक्रीडितं छन्दः॥ १४॥

**अद्वैते**ति। अद्वैतशास्त्रस्य वेदान्तशास्त्रस्याध्ययनेन श्रवणादिनिदिध्यासनपर्यन्तेनसम्यग्विद्यां सम्यग् ज्ञानमासाद्य विवृद्धं सत्त्वं सत्त्वगुणं ज्ञानमिति यावद्यस्य

विद्यापुरीं वीरवरः स्वधाम्ना व्यद्योतत व्याप्तजगत्त्रयीकः ॥१५॥

## [विजयप्रस्थानम्]

हरिद्वधूरात्मगुणानुरागिणीरनुग्रहीष्यन्नखिलाः करग्रहात् ।
प्रहित्य दूतीमिव कीर्तिमग्रतो विभुः प्रतस्थे विजयादरच्छलात् १६

आदौ जित्वा हरिहयदिशामात्मसात्कृत्य शक्त्या
तत्रात्युग्रं दिनकरमिव स्थापयित्वा प्रतापम् ।

---

तादृशः, प्राप्तज्ञानदीप्तिरित्यर्थः "ततः क्षीयते प्रकाशावरणम्" इति पातञ्जलसूचितं ज्ञानोत्कर्षमवाप्तः पुमानिव विवृद्धसत्त्वः प्रवृद्धबलो वीरवरः शूराग्रयायी महौजाः स नरसिंहदेवः विद्यापुरीमेतन्नामिकां पुरीं प्राप्य स्वधाम्ना स्वतेजसा प्रतापेन व्याप्तजगत्त्रयीकः व्याप्ता जगत्त्रयी येन तादृशः सन् व्यद्योतत व्यद्योतिष्ठ । अन्योऽपि वेदान्तनदीष्णः जगत्त्रयीं पारमार्थिक-व्यावहारिक-प्रातिभासिकरूपां स्वधाम्ना व्याप्य विद्योतते । उपेन्द्रवज्रा छन्दः

**हरिदिति** । विभुरीश्वरो नरसिंहदेव आत्मगुणेष्वनुरागिणीरनुरागवतीरखिला हरितो दिश एवं वध्वः स्त्रियस्ताः करग्रहात् करपीडनमहोत्सवाद् ग्रहीष्यन् अनुग्रहीतुमिच्छन् स्वकीर्तिं दूतीमिवाग्रतः (स्वागमनसमाचारविज्ञापनाय) प्रहित्य विजयादरच्छलात् विजये य आदरो गर्धातिशयस्तस्य च्छलाद्व्याजात् विजिगीषया यामीति जगति ख्यापयित्वा (वस्तुतो हरिद्वधूपरिणिनीषया) प्रतस्थे विजययात्रा पटहं ददावित्यर्थः । वंशस्थवृत्तम् ॥ १६ ॥

**आदाविति** । पारावारः समुद्रः स इवाचरतीति पारावारति पारावारतीति पारावारन्-स्त्री चेत् पारावारन्ती तादृशी नरैर्मनुजैर्घना निबिडा चमूपङ्क्तिः सेना-व्यूहो यस्य तादृशः स आदौ सर्वतः प्राक् हरिहयस्य मघवतः('जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः' इत्यमरः) दिशामाशां[1] प्राचीं जित्वा शक्त्या-त्मसात्कृत्य स्वाधीनां कृत्वा तत्र दिशि दिनकरमिव भानुमिव स्वीयमत्युग्रं

---

1 हलन्तदिक्शब्दाद् भागुरिमते टाप्, तस्य द्वितीयायामिदं रूपम् ।

क्षोणीपालः प्रथमजलधेः कूलमार्गेण गत्वा
पारावारन्नरघनचमूपङ्क्तिरागादवाचीम् ॥ १७ ॥

[ तुण्डीरदेशवर्णनम् ]

अथ तत्र गच्छन्नेव करटि-वदन-समाराधन-समुत्कटादर-चटुल-बटुकुल-चटचट-त्रुटित-स्फुटित-भूरि-नारिकेल-वारिधारा-पूरित-सारणी-संवर्द्धित-सरस-सुकुमार-नारङ्ग-मातुलुङ्ग-लवङ्ग-तमाल-ताल-हिन्ताल-रसाल-पूग-पुन्नाग-नाग-नागकेसर-सर्ज-भूर्ज-खर्जूर-चम्पकाशोक-कुरबक-तिलक-बकुल-षण्ड-पिचण्डिलाराम-मण्डल-मण्डितोपकण्ठान्,

---

प्रतापं स्थापयित्वा प्रथमजलधेः पूर्वसागरस्य कूलमार्गेण तीराध्वना गत्वा निर्याय अवाचीं दक्षिणां दिशमागादवापत् ( 'प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः' इत्यमरः ) । मन्दाक्रान्ता वृत्तम् ॥ १७ ॥

अथेति । अथानन्तरं तत्राभिदक्षिणदिशं गच्छन्नेव करटिवदनस्य गजाननस्य समाराधने समुत्कट आदरो येषां ते च ते चटुलाश्चपला बटवस्तेषां कुलं समुदायस्तेन करणभूतेन तद्व्यापारेणेति यावत् चटचटेतिध्वनिपूर्वकं यथा स्यात्तथा त्रुटिताः पादपेभ्यः पतिताः, पूजाङ्गतया गणाधिपमभिस्फुटिता विदीर्णाश्च ये भूरिनारिकेलास्तेषां वारिधारा जलधारा तया पूरिता भृता या सारिणी ( सारणी ) ('प्रसारण्यां स्वल्पनद्यां च सारणी'ति मेदिनी) नदिका कुल्या वा तया द्वारा (जलप्रदानेन) संवर्धिता ये सरसा नारङ्गा नारङ्गीति ख्याताः, मातुलुङ्गा बीजपूराः, लवङ्गा देवकुसुमानि, तमालाः, तालाः, रसालाः, सहकाराः, पूगाः सुपारीतिप्रसिद्धाः, पुन्नागाः, नागाः—नागवल्लीति ख्याताः, नागकेसराः, सर्जकाः, असनाः, भूर्जाः भोजपत्रेति प्रसिद्धाः, खर्जूराः, चम्पकाः, अशोकाः, कुरबकाः, तिलकाः, बकुलाः—मौलसरीति ख्याताः, पादपविशेषास्तेषां षण्डानि समूहाः (' षण्डं पद्मादिसंघाते ' इति

उद्दण्ड-पुण्ड्रेक्षुकाण्ड-प्रकाण्ड-पर्व-निर्विष्ट-विमल-निस्तल-स्थूल-मुक्ताफल-कृत-कृतक-शय-मस्तक-मुहुरारोहावरोह-विहार-रासा-यस्त-कृषीवल-बालिकास्तोक-निःश्वास-पर्यस्त-वासना-लालस-रसायुस्तोम-विस्तारित-पत्त्र-निकाय-नीलमणि-कायमान-तिरोधीयमान-कलम-कैदारिकानवलोकन-गगन-कृत-गतागत-मुखर-शुक-शारिकान्,

---

मेदिनी ) तैः पिचण्डिलाः-बहुशाखापर्णवत्त्वात् घनीभूता य आरामाः उपवनानि तेषां मण्डलानि तैर्मण्डिता उपकण्ठा अङ्कितप्रदेशा येषां तान् तादृशान् । (तुण्डीरदेशानतीत्येति दूरेणाभिसम्बन्धः ) ।

**उद्दण्डे**ति । उद्दण्डा अत्युन्नता दृढाश्च पुण्ड्रेक्षुकाण्डा इक्षुदण्डविशेषास्तेषां प्रकाण्डानि महान्ति यानि पर्वाणि मध्यग्रन्थयः तेषु निर्विष्टानि, विमलैः निस्तलैः वर्त्तुलैः (' निस्तलं वर्त्तुले चले ' इति मेदिनी ) स्थूलैः मुक्ताफलैः कृतानि यानि कृतकानि शयनानि मञ्चास्तेषां मस्तके उपरिभागे शैशवक्रीडावशाद् यो मुहुरारोहावरोहयोर्विहाररासो विहरणक्रीडा तस्मिन्नायस्ताः परिश्रान्ता याः कृषीवलबालिकास्तासामस्तोका बहवो ये निःश्वासास्तैः पर्यस्ता बहिर्विक्षिप्ता या वासनाऽऽमोदविशेषस्तत्र लालसाऽनुरागो यस्य तादृशो यो रसायुस्तोमः रसायुनामकपक्षिविशेषसमूहस्तेन विस्तारितो यः पत्त्रनिकायः पत्त्रसमुदायस्तद्रूपं यन्नीलमणिनिर्मितं कायमानं ( कायमानं तृणकुटीदर्भटं निभृतं गृहमिति त्रिकाण्डशेषः ) तेन तिरोधीयमानाः कलमाः शालयो येषु तादृशं यत् कैदारिकं क्षेत्रसमूहः ('कैदार्यं क्षेत्रं कैदारिकं गणे' इत्यमरः) तस्यानवलोकनेन गगने कृते गतागते गमनागमने येन तादृशाश्च ते मुखरा रवपराश्च शुकाः शारिकाश्च यत्र देशेषु तान् तादृशान् अत्र शुकादीनां गगने समुड्डयनहेतुः शालिमञ्जरीजिघत्सा; रसायुनामकाः पक्षिणश्च तद्देशीया एव,—यद्वा रसायवो भ्रमरा एव गन्धरसोभयलुब्धत्वादिति दिक् ।

एकान्त-कपिश-कणिश-मञ्जरी-विनमनापदेश-प्रकाशिता-भ्याश-विकासि-कुशेशय-मकरन्द-रम्य-निरन्तर-निज-सौन्दर्य-दर्शन-केलि-फलित-शालि-केदार-निवेदित-जानपद-सौभाग्य-लक्ष्मी-विनोद-कनक-वेदिकाबन्धान्,

सन्तत-सन्तन्यमान-सप्ततन्तु-समाहूत-पुरुहूत-प्रमुखादितेय-विरह-विधुर-शातोदरी-व्रात-शत-सञ्जात-रभस-मकरकेतन-निःशेष-लून-प्रवाल-सन्तान-सन्तानक-तरु-दोहद-धूपायमान-होम-धूमाभिरामान्,

---

एकान्तं नितान्तं कपिशाः या कणिशमञ्जर्यः ('कणिशं सस्यमञ्जरी'-त्यमरः) सस्यमञ्जर्यस्तासां विनमनं स्वतो नतिशीलता तस्यापदेशो व्याजस्तेन प्रकाशिता अभ्याशे समीपे विकासिनो विकसनशीलाः ये कुशेशयाः कमलानि तेषां मकरन्दो मरन्दस्तेन रम्यं निरन्तरमविच्छिन्नं यन्निजं स्वाभाविकं सौन्दर्यं तस्य दर्शने साक्षात्कारे केलिः क्रीडाविलासः तस्मै, फलिता विकसिता ये शालिकेदारास्तैर्निवेदिता सम्पादिता समर्पिता वा जनपदसौभाग्यलक्ष्म्या जनपदसम्बन्धिन्याः सौभाग्यलक्ष्म्याः विनोदाय वेदिका कनकबन्धाः सुवर्णचत्वराणि यैस्तादृशान्। तस्मिन् जनपदे शालिक्षेत्राणां कमलानां च प्राचुर्यमभूदित्यैदम्पर्यम्।

सन्ततमनवरतं सन्तताः विच्छेदविरहिता पूर्वं वितता वा सन्तन्यमानाः क्रियमाणाश्च ये सप्ततन्तवो यज्ञास्तत्र समाहूता आकारिता ये पुरुहूतप्रमुखा मघवत्प्रभृतय आदितेयाः देवास्तेषां विरहोऽध्वरोपगमाद् वियोगस्तेन विधुराः पीडिता या शातोदर्यः कृशोदर्यः तासां व्रातशतं समुदायशतकं तत्र विषये सञ्जातः समुत्पन्नो रभसो वेगो यस्य तादृशः ('रभसो वेगहर्षयो'रिति विश्वः) यो मकरकेतनः कामदेवस्तस्मै तत्पीडापनयनायेति यावत्। निःशेषमशेषं यथा स्यात्तथा लूनाश्छिन्नाः प्रवालसन्तानानि किसलयौघा येषां ते च ते सन्तानकतरवः सन्तानकाख्या नन्दनवनतरवस्तेषां दौहृदार्थं धूपायमानो धूप

उन्मीलित-नीलमणि-च्छाया-दायाद-कोमल-श्यामलेक्षुवन-च्छविमयातोयधरागम-भ्रम-संभ्रम-प्रवृत्त-नृत्त मयूर-विस्तारित-वसुवती-विलासवती विस्रस्त-केश-कलापानुकार-कलाप-प्रेक्ष-णीयान्,

द्राक्षा-लता-वितान-सवितान-बाल-रसाल-मूल-च्छाया-निषण्ण-निष्पन्द-गोवृन्द-वदन-निष्यन्दमान-रोमन्थ-बिन्दु-सन्दोह-तारकिताम्बराडम्बर-विडम्बन-चतुर-शाद्वल-देशान्,

कलश-कल्लोलिनीश-जनन-दुर्ललित-स्वर्लोक-नैचिकी-हृ-ल्लभदतुल्याभिमान-शल्य-भरण-विशल्यकरणी-रसायित-

---

इवाचरन् यो होमधूमो यज्ञजन्मा धूमस्तेनाभिरामान् मनोहरान् ।

**उन्मीलितेति** । उन्मीलितो विकस्वरो यो नीलमणिर्मरकतमणिस्तस्य या च्छाया प्रभा तस्या दायादं सदृशं यत् कोमलं श्यामलं चेक्षुवणं तच्छविमयस्य आ ईषत्तोयधराणामागमस्य प्रत्यप्रवर्षाकालस्य भ्रमो भ्रान्तिस्तेन संभ्रमेण संवेगेन प्रवृत्तनृत्ताः समारब्धनर्तना ये मयूरास्तैर्विस्तारितः, वसुमत्येव धरैव विलासवती रमणी, तस्याः विस्रस्तः विगलितबन्धो यः केशकलापः केशपाशस्तस्यानुकारस्तत्सदृश इति यावत् यः कलापः केकिपिच्छोच्चयस्तेन प्रेक्षणीयान् द्रष्टुमर्हान् दर्शनीयान् ।

**द्राक्षेति** । द्राक्षालतायाः वितानं विस्तृतिस्तेन सविताना: सोल्लोचा इव ये बालरसालाः लघ्वाम्रवृक्षास्तेषां मूले छायायां निषण्णं निष्पन्दं विश्रब्धं निश्चलञ्च यद् गोवृन्दं गवां गणस्तस्य वदनादाननात् निष्यन्दमाना ये रोमन्थबिन्दवः चर्वितचवर्णविप्रुषस्तेषां सन्दोहेन तारकितो योऽम्बराडम्बरः, तस्य विडम्बनचतुरो महायामगगनानुकारप्रवीणः शाद्वलविशिष्टो देशो यत्र तान् तादृशान् ।

**कलशेति** । केन जलेन लसतीति कलसः ( शः ) यः कल्लोलिनीनां नदीनामीशो भर्ता तस्माद्यज्जननमुत्पत्तिस्तेन हेतुना दुर्ललिता या स्वर्लोकस्य नैचिकी गौः ( 'उत्तमा गोषु नैचिकी'त्यमरः ) तस्याः हृदि हृदये

समुल्लसदापीनानिश-वहमान-दुग्ध-कुल्या-शत-दर्शित-क्षीर-वाराकर-समूह-माहा-समज-कल्यतर-महोपशल्यान्,

उल्लसित-गन्धवह-पुरोहित-प्रेरित-क्रमुक-वरोदुह्यमान-लेलिहान-लता-वधू-परिविकीर्ण-शेषाक्षत-सदृश-कुहली-कुहराञ्जलि-क्षरित-किञ्जल्क-निकर परिष्कृत-निष्कुट-चतुष्कान्,

---

लभन्नुपगच्छन् योऽतुल्योऽभिमानस्तदेव शल्यव्रणस्तस्य भरणमवरोपणं तदर्थं या विशल्यकरणी हिमाद्रिशिखररूढौषधिविशेषस्तस्य यो रसो द्रवस्तदाचरणशीलं यत् समुल्लसदापूर्यमाणमापीनमूधस्तस्मादनिशं वहमानं यद्दुग्धकुल्याशतं पयःसारिणीसङ्घातस्तेन दर्शितः क्षीरवाराकरस्य क्षीरोदनिकरस्य समूहो येन तादृशो यो माहा[1] "मा" इति शब्दं य आह स माहः स्त्री चेन्माहा धेनवस्तासां समाजः समूहस्तेन कल्यतरं प्रशस्यतरमुपशल्यं ग्रामप्रान्तभागो येषां (देशानाम्) तान्। अयमाशयः स्वर्नैचिकी क्षीरोदजातत्वाज्ज्येष्ठास्मीति गर्वं बभार, तुण्डीरगावस्तु तद्गर्वमपनेतुं 'यतस्त्वमासि जाता तज्जनिका वय'मिति मनीषयेव क्षीरोदनिकरविसरमुत्पाद्य तद्दर्पशातनं चक्रुरिति।

**उल्लसिते**ति। उल्लसितः प्रसन्नो यो गन्धवहो वातः स एव पुरोहितस्तेन प्रेरित आन्दोलितो यः क्रमुकः क्रमुकपादपः स एव वरो लब्धविवाहदीक्षस्तेनोदुह्यमाना गृह्यमाणपाणिः उदुपरि उह्यमाना धार्यमाणा च या लेलिहानलता नागवल्लीव्रततिः सैव वधूस्तया परिविकीर्णास्ततः शेषाश्च येऽक्षतसदृशाः कुहलीकुहराञ्जलिक्षरिता ताम्बूलीदलछिद्ररूपाञ्जलिपतिताः किञ्जल्कनिकरास्तैः परिष्कृतं निष्कुटस्य गृहारामस्य चतुष्कं तुण्डीरमण्डपं यत्र तादृशान्।

---

१ वस्तुतस्तु 'माहेयी' शब्देनात्र भवितव्यम्, लेखकप्रमादपतितोऽयमपपाठः, 'माहा' शब्दस्यास्मिन्नर्थेऽदृष्टत्वात्, व्युत्पत्तेरप्यरमणीयत्वाच्च।

आविष्कृत-जानपद-मानवती-जन-घनतरोरूपमान-बहु-मान-वर्णनाकर्णनावनत-मौलि-लीला-मिलित-परिणत-फल-स्तबकानीच-मोचावन-मेचक-कवचितान्,

अनुकल-जागरूक-विमल-कुसुम-कोरक-राजत-भाजन-विराजित-हारिद्र-कर्दम-कवल-जाल-लालनीय-परिपाक-कपिल-फलोत्कर-हारि-महाराम-कुडुंबि-नारङ्गलता-नताङ्गी-समुत्तरङ्गी-कृत-जनपद-सौभाग्य-रमा-योग्यतम-द्वन्द्व-कन्दलदमन्द-विवाह-महोत्सवान्,

औत्सुक्यकर-निज-सौभाग्याभिलाषि-त्रिविष्टपाभीष्ट-

---

**आविष्कृते**ति । आविष्कृतं यद् जानपदमानवतीजनस्य नागरिकस्त्री-व्रातस्य घनतरोरूपमान निबिडजघनसादृश्यं तदेव बहुमानं तस्य यद् वर्णनं तदाकर्णनेनावनतो यो मौलिस्तस्य लीला तया मिलिताः संघातमापन्नाः परिणतफलस्तबकाः पक्वफलगुच्छा येषां तादृशानि यानि अनीचमोचावनानि प्रभूतकदलीवनानि तः कृत्वा मेचका नाला या रुचिः कान्तिस्तया कवचितान् आच्छन्नान् । एतेन कदलीवनप्राचुर्यं द्योत्यते ।

**अनुकले**ति । अनुकलं प्रतिक्षणं जागरूका विकसिताः ये कुसुमकोरका-स्त एव राजतभाजनानि तेषु विराजितो यो हारिद्रकर्दमस्य हरिद्राचूर्णद्रवस्य कवलजालवल्लालनीयः शोभमानः परिपाकेन कपिलो धूसरः फलोत्करस्तेन हारी मनोहरो यो महारामो महोद्यानं स एव कुटुम्बी गृहमेधी तस्य या नार-ङ्गलताख्या नताङ्गी तया समुत्तरङ्गीकृतमुत्सुकतां नीतं यद् जनपदस्य सौभाग्य-रमायाश्च योग्यतमं द्वन्द्वं युगलं तस्य कन्दलन्नभिनीयमानो महान् विवाह-महोत्सवो येषु तान् । सौभाग्यलक्ष्मी तुण्डीरदेश एव वसति स्मेतिभावः ।

**औत्सुक्ये**ति । औत्सुक्यकरं यन्निजसौभाग्यं तुण्डीरदेशसौभाग्यं तदभिलाषि यत् त्रिविष्टपं स्वर्लोकस्तस्याभीष्टप्रदानायोदस्त उत्क्षिप्तो यो

प्रदानोदस्त-वसुमती-हस्तोदार-फलित-नालिकेर-वन - सहस्र-प्रशस्यान्,

अर्यम-मरीचि-विकचानीच-गोचर-सन्तत-नीरन्ध्र-वसुन्धरारुहान्तर-सन्दृश्यमान-प्रसून-रजस्सन्दर्शितेप्सित-सरणि-स्मरणीय-धरणी-तरुणी-सिन्दूरित-सीमन्त-सौन्दर्यान्,

निरन्तरान्धकारित-दिगन्तर-कन्दलदमन्द-सुधारस-बिन्दु-सान्द्रतर-घनाघन-वृन्द-सन्देहकर-स्यन्दमान-मकरन्द-बिन्दु-बन्धुरतर-माकन्द-तरु-कुल-तल्प-कल्प-मृदुल-सिकता-जाल-जटिल-मूल-तल-मरुवक-मिलदलघु-लघु-लय-कलित-रमणीय-पानीय-शालिका-बालिका-करारविन्द-गलन्तिका-

---

वसुमतीहस्तः तत्सदृशमुदारफलितं नालिकेरवनसहस्रं तेन प्रशस्यान्। नारिकेलतरुरूपेण हस्तेन वसुमतीनायिका त्रिविष्टपायाभीष्टं ददातीति भावः।

**अर्यमेति**। अर्यम्णः सूर्यस्य मरीचिभिर्विकचाः स्फुटिता अनीचगोचराः समुन्नताः सन्ततं नीरन्ध्रा निबिडाश्च ये वसुन्धरारुहास्तेषामन्तरे सन्दृश्यमानं यत्प्रसूनरजः पुष्पपरागस्तेन संदर्शिता येप्सिता मनोहरा सरणिः श्रेणिस्तया स्मरणीयं धरणीतरुण्याः सिन्दूरितस्य लग्नसिन्दूरस्य सीमन्तस्य सौभाग्यं येषु तान्।

**निरन्तरेति**। माकन्दवृक्षैर्निचितत्वात्। निरन्तरं निरवकाशमत एवान्धकारितं च दिगन्तरं दिगन्त एलप्रदेशो येन तादृशस्तथा कन्दलन् नवपल्लवीभवन् अमन्दसुधारसबिन्दुभिरमृतकिरणैः सान्द्रतरो यो घनाघनवृन्दस्तस्य सन्देहकरो वर्षन्मेघनिचयस्पर्धी च यः स्यन्दमानमकरन्दबिन्दुभिर्बन्धुरतरो माकन्दतरुस्तस्य कुलं तस्य तल्पकल्पं यन्मृदुलं सिकताजालं तेन जटिले मूलतले मरुवकैर्मिलन्तो येऽलघवो बहवो लघुलयाः खसाख्यतृणविशेषास्तैः कलिता याः पानीयशालिकाः प्रपास्तासु नियुक्ता या बालिकास्तासां करारविन्द-

गलदेला-लवङ्ग-पाटल-घनसार-कस्तूरिकातिसौरभ-मेदुर-लघु-तर-मधुर-शीतलतर-सलिलधारा-निराकरिष्णु-तदीय-विमल-विलोचन-मयूख-रेखापसारित-पिपासायास-पथिक-लोकान्,

पाकापकारि-लोकातिरिक्त-धरित्री-विचित्र-सौभाग्य-गणना-रेखा-श्लाघनीय-जानपद-रमा-विलास-सञ्चरण-पुरोविस्तारित-धवल-वस्त्रानुकारि-सारणीशत-विराजितान्,

राजीव-निवहापहसित-सहस्राक्ष-चक्षुर्लक्ष्मीकैः, मानस-सरोवर-सदृशैः, विमल-सलिल-रसावधूत-सुधासारैः, प्रसूनावचिचीषा-समागत-विशङ्कट-पुटकिनीपत्र-पुट-कर-चटुल-वटु-निकट-कृता-सार-प्रसारैः कासारैरासादितप्रमोदान्,

---

स्थिता या गलन्तिका भृङ्गारास्ताभ्यो गलच्च्यवद् यद् एलालवङ्गपाटल-( शतपत्र–गुलाब ) घनसार ( कर्पूर ) कस्तूरिकाभिरतिसौरभेण मेदुरमति-शयगन्धाढ्यं लघुतरं शीघ्रपचनशीलं मधुरं शीतलतरं च सलिलं तस्य धाराः तन्निराकरिष्णवो यास्तदीया बालिकासम्बन्धिन्यो विमलविलोचनमयूख-रेखास्ताभिरपसारितः पिपासाजन्य आयासोऽध्वश्रमो यस्य तादृशः पथिक-लोको यत्र तानित्यर्थः। प्रचुराम्रपादपः प्रभूतप्रपश्च चोलदेश इति भावः।

**पाकेति**। पाको दैत्यविशेषस्तदपकारी हन्ता महेन्द्रस्तस्य लोकः स्वर्ग-स्तदतिरिक्ता तस्मादपि विशिष्टा या धरित्री तस्या विचित्रसौभाग्यगणनायां क्रियमाणायां या रेखास्तद्वत् श्लाघनीयं जानपदरमाया विलासपूर्वकं सञ्च-रणार्थं विचरणार्थं पुरो विस्तारितं धवलवस्त्रानुकारिश्वेतकर्पटतुल्यं च यत्सारणी-शतं कुल्यासमूहः तेन विराजितान्। सारणीषु सौभाग्यं गणनारेखारूपत्वं, प्रसारितवस्त्रतुल्यत्वं चोत्प्रेक्ष्यते।

**राजीवेति**। राजीवनिवहतिरस्कृतेन्द्रचक्षुः श्रीभिरित्यर्थः, स्पष्टमन्यत्। प्रसूनेत्यादि–प्रसूनानामवचिचीषया समागतः, विशङ्कटं विशालः पुटकिन्याः

वेद-वेदान्त-विद्या-प्रत्युद्यात-शेमुषी-पद्यैः, दैत्यारि-स्तुति-प्रस्ताव-विस्तारित-हृद्यानवद्यार्थ-विद्योतमान-गद्य-पद्यैः, विध्या-चरित-सकलातिथि-सत्कारावितथीकृततिथिभिः, सौजन्य-सीमावधिभिः, अनितर-सुलभ-तत्त्व-ज्ञानोपज्ञ-प्रज्ञैः, निगमा-गम-निदर्शनायित-निर्मल-निज-कर्मभिः, द्विज-मणिभिरलंकृत-महाग्रहारान्,

दूरीकृत-दुरित-ग्रह-नाम-ग्रहण-संस्मरण-मात्र-प्रतीष्टाभीष्ट-फल-देवतालय-काल-त्रय-प्रवृत्त-नृत्तारम्भ-जृम्भित-मर्द्दल-निध्वा-न-पटु-पटह-तूर्य-रवापूर्यमाण-हरिदन्तरान्,

सन्तत-वैमानिक-नायकानून-जानपद-वैभवावलोकन-कुतू-

---

कमलिन्याः पत्रपुटः करे यस्य तादृशश्च यश्चटुलबटुनिकरश्चपलबालसंघ-स्तेन कृतगमागमैः कासारैरासादितः प्रमोदो यैः तान्।

वेदेति। वेदवेदान्तविद्यया प्रत्युद्याता शेमुषीपद्या बुद्धिसरणिर्येषां तैरि-त्यादिस्पष्टम्। दैत्यारीत्यादिस्पष्टम्। विध्यादीतिस्पष्टम्। विध्याचरितः यथाविधिकृतः। अवधिभिश्चरममर्यादाभिः। अनितरेत्यादिस्पष्टम्। निगमा-गमनिदर्शनायितं वेदेषु शास्त्रेषु चोदाहरणीभूतं निर्मलं निजं स्वाभाविकं कर्म येषां तैस्तादृशैर्द्विजमणिभिः सुशोभिता महाग्रहारा महान्तो ब्राह्मणेभ्यो दत्ता ग्रामविशेषा येषु तान्।

दूरीकृतेति। दूरीकृता दुरितग्रहा याभिस्ताः, नामग्रहणसंस्मरण-मात्रेण प्रतीष्टानि दत्तान्यभीष्टफलानि याभिस्ताश्च ताः देवतास्तासामालयेषु मन्दिरेषु कालत्रयं प्रवृत्तं यन्नृत्तं तस्यारम्भे जृम्भितः प्रवृद्धो यो मर्द्दलस्य निध्वानः पटुपटहतूर्याणां रवश्च तेनापूर्यमाणं हरिदन्तरं दिगन्तरं येषां तान्।

सन्ततेति। सन्ततं वैमानिकानां देवानां नायक इन्द्रस्तस्मादनूनं यज्जान-पदवैभवं तदवलोकनकुतूहलादागतो यः कनकशिखरी तस्य शिखरनिकर-

हलागतकनक-शिखरि-शिखर-निकर-सख-धान्यराशि-प्रकाशित-खल-प्रदेशान् ।

प्रशस्य-सकल-सस्य-संपदाण्डीरभुवस्तुण्डीरानतीत्य, सुत्राम-लोक-प्रत्यादेशान्, अत्यादरणीय-रामणीयक-निवेशान्, चोलदेशान् अयासीत् ।

[ चोलदेशवर्णनम् ]

त्रैलोक्यसारसमवायसहोपमेयान्
आलोक्य चोलविषयानवनीमहेन्द्रः ।
नाकार्पिणा शतमखो नलिनासनेन
शङ्के विमोहित इति स्फुटमाशशङ्के ॥ १८ ॥

भृत्येषु पीडयति यः परकीयबुद्ध्या
देशानिमान् मम तु दण्ड्यतमस्स एव ।
सेनाधिपानिति महीपतिरादिदेश
शौर्यावधारितसमस्तजगज्जयश्रीः ॥ १९ ॥

---

सखा ये धान्यराशयस्तैः प्रकाशिताः खलानां (धान्योपरिवाह्यमानगोबलीबर्दस्थलानां) प्रदेशा येषु तान् ।

**प्रशस्ये**ति । आण्डीराः शक्तपुरुषाः, तेषां भूरुद्भवो येषु तान्, यद्वा भुव एवैतद्विशेषणम् । स्पष्टमन्यत् । तुण्डीरान् एतन्नामकान्देशान् अतीत्य । सुत्रामेत्यादि—तिरस्कृतस्वर्गलोकानित्यर्थः । अत्यादरणीयेत्यादि स्पष्टम् ।

**त्रैलोक्ये**ति । त्रैलोक्यसारसमवायेन सहोपमेयान् चोलदेशानालोक्य अवनीमहेन्द्रो नृसिंहदेवो ब्रह्मणा स्वर्गाधिपत्यं वासवाय दत्त्वा शङ्के मन्ये स विमोहितो विप्रलब्ध इति स्फुटमाशशङ्के शङ्कितवान् । वसन्ततिलकं वृत्तम् ॥ १८ ॥

**भृत्येष्वि**ति । यो मम भृत्येषु इमान् देशान् 'परस्येमे विषया' इति

## [ कावेरीवर्णनम् ]

ततो व्रजन्नेव धरेन्दुरग्रे कवेरकन्यां कलयाञ्चकार ।
भ्रभङ्गसङ्काशतरङ्गरेखास्फुटद्युगङ्गोपरिवासरोषाम् ॥२०॥

सान्द्रतर-तट-महीरुहान्तर-निपतदरविन्द-बन्धु-मयूख-दण्ड-सन्दित-पर्यन्त-सन्तत-परिवर्त्तमान-जलावर्त-चक्र-निर्वर्तित-बहिर्विस्तृत-बहुविध-कलश-सार्थ-समर्थनीय-शतपत्र-मुकुल-जाल-विचित्राम्,

विनिद्राम्भोज-राजि-व्याज-विवर-विराजित-गम्भीरता-निष्पन्द-नीरपूर-विनोदन-साधन-फलकान्तर-तरल-भसल-कुल-

---

बुद्धया क्लिश्नाति स मम दण्ड्यतमो भविष्यतीति शौर्येणासादिता समस्तजगतां जयश्रीर्येन स महीपतिरादिष्टवान् । वसन्ततिलकं वृत्तम् ॥१६॥

**तत** इति । ततो व्रजन् धरेन्दुरग्रे पुरः कावेरीमाससाद—यस्या भ्रूभङ्गसदृशीभिस्तरङ्गमालाभिर्द्युगङ्गाया उपरिवासं प्रति रोषः स्फुटं प्रतीयते स्म उपजातिवृत्तम्॥२०॥(अनन्तरमवनीमहेन्द्रः नीराजनामारचय्य कावेरीमतारीदिति विप्रकृष्टेनान्वयः )। कावेरीं वर्णयति सान्द्रतरेत्यादिना—

**सान्द्रतरे**ति । सान्द्रतरा ये तटमहीरुहास्तदन्तरेभ्यो निपतन्तो येऽरविन्दबन्धोर्भास्करस्य मयूखास्त एव दण्डास्तैः सन्दितपर्यन्तो निबद्धप्रान्तभागोऽत एव सन्ततं परिवर्त्तमानो यो जलावर्त्तः स एव चक्रं तेन निर्वर्तिताः बहिरातपे शोषणार्थं विस्तृताश्च ये बहुविधाः कलशानां सार्थास्तैः समर्थनीयमुपमेयं यच्छतपत्रमुकुलानां जालं तेन विचित्राम् ।

**विनिद्रे**ति । विनिद्राम्भोजराजिव्याजेन यद्विवरं ( फुल्लाम्भोजमेव छिद्रितं गुलिकास्थापनस्थानम् ) तेन विराजितं शोभितं यद्गम्भीरतया निष्पन्दं नीरं तस्य पूरः स एव विनोदनस्य क्रीडायाः साधनीभूतफलकं

नीलमणि-जाल-प्रतिक्षण-निक्षेपणोत्क्षेपण-विधि-लक्षण पवन-वश-क्षुभितावनमद्विटप-भुज-सलक्ष्मीकोभय-तट-क्षोणीरुह्-श्रेणिकाम् ,

सतत-सलिल-वसति-जनित-जाडिम-हरण-करण-तरणि-किरण-परिचरण-पर-जल-मानव-माणवकारोहावरोह-सन्दित-पुरन्दर-मणि-सोपान-पङ्क्ति-बन्धुर-तट-द्वन्द्व-तरु-जाल-च्छायान्तर-दन्तुरितान्तिक-निरन्तरोन्मीलदूर्मि-सन्ततिम् ,

तरल-तरङ्गोत्कर-वारि-जात-समुद्धत-पराग-पालि-मेलित-तीर-तल-तरुण-तरु-शाखा-शय-कुसुम-मञ्जरी-तूर्ण-विकीर्ण-पांसु-सन्तति-सन्दर्शित-वसन्त-गन्ध-चूर्ण-मुष्टि-विहाराम् ,

---

तदन्तरे तरलं यद्बसलकुलं भ्रमरसमूहः तदेव नीलमणिजालं मणिनिर्मितगुलिकासमूहस्तस्य प्रतिक्षणं निक्षेपोत्क्षेपविधानकारका ये पवनवशेन क्षुभिता अवनमन्तश्च विटपाः शाखास्त एव भुजास्तैः सलक्ष्मीका उभयतटस्थानां क्षोणीरुहाणां श्रेणिर्यत्र ताम् । अत्र गुलिकाक्रीडावर्णनं विद्यते ।

**सततेति** । सततं या सलिले वसतिस्तेन हेतुनोत्पन्नो यो जडिमा शैत्यं तस्य हरणे करणं कारणं यत्तरणिकिरणपरिचरणं सूर्यातपसेवनं तत्परा ये जलमानवमाणवकास्तेषां य आरोहावरोहास्तैः सन्दिता संबद्धा या पुरन्दरमणिसोपानपङ्क्तिरिन्द्रनीलमणिकृतसोपानश्रेणिस्तया बन्धुरं यत्तटद्वन्द्वं तत्र यत्तरुजालं तस्य छायया मध्ये मध्ये दन्तुरितं यदन्तिकमन्तिकप्रदेशस्तत्र निरन्तरमुन्मीलन्ती वीचिसन्ततिर्यत्र ताम् । अत्र जलमानवानां क्रीडावर्णनम् ।

**तरलेति** । तरलतरङ्गोत्करेण वारिजातानां कमलानां समुद्धतया परागपाल्या परागनिचयेन मेलितः संबन्धितो यस्तीरतलस्थस्तरुणतरुस्तस्य शाखा तत्र शया ( शयनशीला ) या कुसुममञ्जरी तया तूर्णं विकीर्णा या

समीरण-संचरण-वश-विनमदुन्नमदायतावनत शाखा-पल्लवाञ्चल-समुत्क्षिप्यमाण-सलिल-पृषत-मेदुरित-विहग-कूजित-मुखरीकृत-तीर-मही-जात-जातानुकृत-समन्त्रोच्चारण-प्रोक्षण-परतन्त्र-मुनीन्द्र-वृन्दाम् ,

वृन्दारक-सरणि-सञ्चरण-कन्दलदमन्दानन्द-मन्दाकिनी-महीतलनिपातनोदस्त-हस्त-प्रशस्त-समुल्लोल-कल्लोलाम् ,

उल्लसदधिकानुराग-नीहार-गिरि-कुमारिका-कान्त-पार्श्व-द्वय-महेश्वर-वपुरुपमेयोभय-तीर-भूरुह-च्छाया-मेदुरित-सविध-विमलान्तराल-नीर-पूराम् ,

---

पांसुसन्ततिस्तया सन्ततं संदर्शितः वसन्ते ( होलावसरे ) गन्धचूर्णमुष्टेर्विहारो यत्र ताम् । होलासु धूलिक्रीडनमत्र वर्णितम् ।

**समीरणे**ति । समीरणस्य सञ्चरणवशेन विनमन्नुन्नमँश्चायतानां विस्तृतानामवनतानां विनम्राणां च शाखानां पल्लवाञ्चलेन समुत्क्षिप्यमाणा ये सलिलपृषतास्तैर्मेदुरिताः स्निग्धीकृता ये विहगास्तेषां कूजितेन मुखरीकृता ये तीरमहीजातास्तटमहीरुहास्तेषां जातं समूहस्तेनानुकृतं सदृशतां नीतं मन्त्रोच्चारणसहितप्रोक्षणेऽङ्गमार्जने परतन्त्रं लग्नं मुनीन्द्रवृन्दं यत्र ताम् ।

**वृन्दारके**ति । वृन्दारकाणां देवानां सरणिरध्वा नभ इति यावत्, तत्र सञ्चरणेन कन्दलन् प्रादुर्भवन् महानानन्दो यस्याः सा चासौ मन्दाकिनी तस्या महीतले निपातनाय उदस्तहस्त इव प्रशस्ताः समुल्लोलाः कल्लोला यस्यास्ताम् ।

**उल्लसदि**ति । उल्लसन् अधिकोऽनुरागो यस्यास्तादृशी या नीहारगिरि ( हिमालय ) कुमारिका ( पार्वती ) तया कान्तं मनोहरं ( अभूतोपमेयम् ) पार्श्वद्वयं यस्य तादृशं यन्महेश्वरस्य वपुस्तेनोपमेयः उभयतीरस्थितवृक्षच्छायया मेदुरितैः सविधोन्तिकप्रदेशो यस्य तादृशो विमलान्तरालो नीरपूरो यस्यास्ताम् ।

निकट-तट-विटपि-निविड-विटपान्तर-निपात-कठोरकिरण-किरण-कनकशृङ्खला-सङ्गत-तरङ्ग-दोला-लीलायित-लोल-जालपाद-बालिका-पालिकाम्,

ध्रुव-चरण-परिक्रममाण-ग्रह-तारागणानुकरण-सलिल-भ्रमि-वश-परिभ्रमच्चक्राङ्ग-सारस-कारण्डव-मण्डलाम्,

निमज्जन्नियमवज्जन-निःश्रेयस-श्री-समुद्वाह-महोत्सव-समुचित-विचित्र-मङ्गल-कलश-जाल-लालनीय-विदलद्दलारविन्द-रसास्वाद-निमग्नोत्थित-परिभ्रमदिन्दिन्दिर-पक्षान्तर-निष्यन्दमान-मरन्द-बिन्दु-चन्द्रकित-सौगन्धिक-मुकुल-पङ्क्ति-बन्धुरिताम्,

---

**निकटेति**। निकटः प्रान्तवर्ती यस्तटविटपी तीरवृक्षः तस्य निबिडशाखान्तरालात् निपातो येषां तादृशा ये कठोरकिरणस्य तिग्मरश्मेः किरणास्त एव कनकशृंखलास्ताभिः सङ्गताः सन्दिताश्चुम्बिताश्च ये तरङ्गास्तेषु यद्दोलालीलायितं दोलान्दोलनक्रीडाकरणं तत्र लोला लोलुपा जालपादानां हंसानां याः बालिकास्तासां पालिकाम्।

**ध्रुवचरणेति**। ध्रुवस्य चरणेन मूलभागे परिक्रममाणो यो ग्रहतारागणस्तस्यानुकरणायेव सलिलभ्रमिवशात् जलावर्तवेगवशात् परिभ्रमच्चक्राङ्गसारसकारण्डवानां मण्डलं यत्र ताम्।

**निमज्जदिति**। निमज्जतां नियमवतां जनानां निःश्रेयसस्य श्रिया लक्ष्म्या सहसमुद्वाहस्तस्य महोत्सवाय समुचिता ये विचित्रा मङ्गलकलशास्तेषां यत् जालं तद्वल्लालनीयानां विदलद्दलानां विकसतामरविन्दानां यो रसस्तस्यास्वादे पूर्वं निमग्नाः पश्चादुत्थिताः परिभ्रमन्तश्च य इन्दिन्दिरास्तेषां पक्षान्तरेभ्यो निष्यन्दमाना ये मकरन्दबिन्दवस्तैः चन्द्रकितानि यानि सौगन्धिकमुकुलानि कह्लारकुड्मलाः तेषां पङ्क्त्या बन्धुरिता नतोन्नता ताम्।

समुत्तुङ्ग-भङ्ग-महोपधान-संगत-शंबर-प्रवाह-वरुण-पङ्कज महापर्यङ्क-निहित-वर्त्तुलाबृहदुपबर्हण-स्पृहणीय-मिहिर-बिम्ब-जनित-सौन्दर्याम्,

सान्द्रतर-शकुनि-कुल-कुसुम-भर-तरल-कोमल-शैवाल-जाल-केशपाश-दर्शनीय-स्रवन्ती-कान्त-नितान्त-रति-श्रान्ति-संवेश-पारवश्य-वश-विशीर्ण-कुश-कौशेय-समुन्नत-सैकत-नितम्ब-हंस-संसदमल-दुकूल-विधान-सावधान-वीची-भुजा-विराजिताम्,

अनुकूल-निपतदुदभिपतदखिल-जल-विहग कुल-गरुदुदरभरित-सलिल-पृषत-निवसित-तट-युगल-नियत-किसलयित-विटपि-परिषदभिवृत-जलधर-सरणि-परिहसित-युगपदुदयदु-

---

**समुत्तुङ्गे**ति । समुत्तुङ्गा भङ्गा ऊर्मयः (भङ्गस्तरङ्ग ऊर्मिर्वे'त्यमरः) त एव महोपधानानि तैः संगतो यः शम्बरस्य जलस्य प्रवाहः स एव वरुणस्य महापर्यङ्कस्तत्र निहितानि वर्त्तुलान्यबृहन्ति चोपबर्हणानि तद्वत् स्पृहणीया ये मिहिरबिम्बास्तैर्जनितं सौन्दर्यं यस्यां तादृशी ।

**सान्द्रतरे**ति । सान्द्रतरं निबिडतरं यच्छकुनिकुलं तदेव पक्षिसमूहः कुसुमभरस्तथा तरलकोमलशैवालजालमेव केशपाशस्तेन दर्शनीया या स्रवन्ती कान्तेन सह नितान्तं रतिस्तज्जनिता या श्रान्तिस्तेन संवेशे निद्रायां यत्पारवश्यं तद्वशेन विशीर्णाः कुशा एव कौशेयानि चीनांशुकानि यस्मात्तादृग् यत् समुन्नतं सैकतमेव नितम्बबिम्बस्तत्र हंससंसदेवामलं दुकूलं तस्य विधाने प्रावरणे सावधाना ये वीचीभुजास्तैर्विराजिताम् ।

**अनुकूले**ति । कूलाभिमुखं निपतन्त ऊर्ध्वमभिपतन्तश्च येऽखिला जलविहगास्तेषां कुलं तस्य गरुन्ति पक्षपुटास्तन्मध्ये भरिता ये सलिलपृषताः जलबिन्दवः तैर्निवसिता आच्छादिता ये तटयुगले नियतं यथा स्यात्तथा पल्ल-

डु-गण-कनक-गिरि-शिखर-परिगत-सुर नगर-तरङ्गिणीम् ,

प्रकट-विघटमान-पुटकिनी-कुसुम-हाटक-भाजन-हरित-मधु-रस-रसन-समासीन-राजहंस-बिस-रस-सहभोजन-सतत-प्रकाशन-पेशल-शैशवैः, अभ्याश-विलसदावर्न्ती-रभस-विवर्तमान-शतपत्र-मुकुल-विवर्तक-केली-प्रवर्तक-समीर-कुमारक-विस्तारित-पाश-नीकाश-रेखाशतैः, आकाशतल-विमलता-वादासह-सलिल-प्रसाद-रभस-सन्धान-कुतुक-विरचित-यातायात-मेघ-पृथु-कोप-मान-साधित-साधिमभिः, अभिनव-पद्मिनी-परिषद-तिचपल-वीची-भुजा-विराजित-राजीव-करतलोत्पतनापतन-

---

विता विटपिनस्तेषां परिषदा समूहेनाऽभिवृता या जलधरसरणिस्तया परिहसिता युगपदुदयन्नुडुगणो यत्र तादृशं यत् कनकगिरेः शिखरं तेन परिगता सुरनगरतरङ्गिणी यया ताम् ।

प्रकटेति । द्विरेफान् वर्णयति—प्रकटं विघटमानं विकसत् यत्पुटकिन्याः कमलिन्याः कुसुमं तदेव हाटकभाजनं तत्र निहितो यो मधुरसस्तस्य रसनार्थं समासीना ये राजहंसास्तैः सह बिसरसस्य यत्सहभोजनं तस्य सततं प्रकाशने पेशलं दक्षं ('चारौ दक्षे च पेशलः' इत्यमरः) शैशवं येषां तैः, अभ्याशे विलसन्य आवर्तस्तस्य रभसेन वेगेन विवर्तमानं यच्छतपत्रमुकुलं तस्य विवर्तक आन्दोलकः केलिप्रवर्तकश्च यः समीरकुमारको मन्दं वहन् वायुस्तेन विस्तारिताः ये पाशास्तन्नीकाशानि रेखाशतानि पङ्क्तिशतानि येषां तैः, आकाशतलस्य यो विमलताया वादः प्रसिद्धिस्तदसहो यः (कावेर्याः) सलिलस्य प्रसादस्तेन यत् रभसस्य हर्षस्य सन्धानं तस्य कुतुकं तेन हेतुना विरचितं यातायातं यैस्तादृशा ये मेघपृथुका मेघखण्डास्तेषामुपमाने साधितः साधिमा साधुत्वं यैस्ते । कावेरीजलभ्रमद्भ्रमराणामाकाशमेघखण्डानाञ्चान्योन्यं साम्यमत्र निरूपितम् । अभिनवा या पद्मिन्यस्तासां परिषदोऽति चपला वीचय एव

दर्शनीय-केली-नीलमणि-घुटिकानुकारि-चटुलाकारैः, रसातलो-
ज्जिहान-वाजिनी-नाल-निभ-व्याल-निरालस्य-नलिन-फणा-फ-
लक-विलसमान-कालिम-मरीचि-भङ्ग-शङ्कनीयैः, पाथोन्तर-गत-
प्राचेतस-निकेत-सौध-जलावर्त-वातायन-कन्दलदमन्द-गन्ध-धूम-
बन्धुरैः, इन्दिन्दिर-सन्दोहैः, निरन्तर-मुखरित-दिगन्तराम्,

उदारान्तराल-मेलित-कुमुद-कुवलय-कमल-कुड्मल-शैवाल-
जाल-शवलितावर्त्त-विचित्रतरारार्तिक-पात्र-समुल्लसित-हल्लक-
कोरक-दीप-कलिकाभिः, विजय-नीराजनामारचय्य निपत-
दभिनव-तट-तरु-कुसुम-सरस-केसर-विसर-ग्रसन-रस-सरभस-

---

भुजास्तासु विराजितानि यानि राजीवरूपाणि करतलानि तत्र यदुत्पतन-
मुत्क्षेपणमापतनमधःपातश्च तेन दर्शनीयकेलयो या नीलमणिघुटिका
नीलमणिगुलिकाः तदनुकारी चटुल आकारो येषां तैः। रसातलादुज्जिहाना
या वाजिनी कमलिनी तस्या नालं तस्य निभेन व्याजेन यो व्यालस्तस्य
निरालस्यमुन्मुद्रितं यन्नलिनं तदेव फणाफलकं तत्र विलसमानाः याः कालिमयुक्ता
मरीचयस्तासां भङ्गाः रचनाविशेषास्तत्सदृशैः । भ्रमराः कालव्याल-
फणामरीचिनिभा आसन्नित्यर्थः। किञ्च पाथसामन्तरगतं यत् प्राचेतसस्य
वरुणस्य निकेतसौधं निवासप्रासादस्तत्र जलावर्त्ता एव वातायनानि गवाक्षाः
तेषु कन्दलन्योऽमन्दो गन्धधूमस्तद्वत् बन्धुरैः सुन्दरैरिन्दिन्दिराणां मधु-
पानां सन्दोहैर्निरन्तरं मुखरितानि दिगन्तराणि यया ताम्।

उदारेति। उदारं महद्यदन्तरालं तत्र मेलितं सम्पिण्डितं यत् कुमुद-
कुवलयकमलकुड्मलानां शैवालानां च जालं तेन शवलिता य आवर्त्तास्त
एव विचित्रतराण्यारार्तिकपात्राणि तत्र समुल्लसिता ये हल्लकानां रक्ताम्भो-
जानां कोरकास्त एव दीपककलिकास्ताभिर्विजयनीराजनामारचय्य, निपतन्तो
येऽभिनवास्तटतरुकुसुमसरसकेसरास्तेषां विसरस्य ग्रसने रसेन सरभसं सहर्ष

सारस-मुख-शकुनि-रसित-विलसितैः, उपर्युपरि-समुद्गच्छदूर्मि-च्छटाभिरभिसंहिततमं 'समागच्छ विजयस्व' इति समया-नुरूपानुलापपुरस्सरम्, आत्मसैन्यस्य हस्तसंज्ञामिव, रचयन्तीम्,

पन्नगराजमूर्तिमिव प्रशस्तपावनवृत्तिम्, शमिजन-चित्तवृत्तिमिव सर्वरसावधीरणनिपुणामृतरुचिम्, शर्वाणी-मिव सह्यगिरीशदृढतररसानुभवाम्, रामकथामिव बहुल-हरिलसिताम्, शैलूषीमिव बहुशस्तरङ्गनटनशोभिताम्, अध्या-

---

यानि सारसमुखानां शकुनीनां रसितानि तेषां विलसितैः उपर्युपरि समुद्ग-च्छन्तीनाम् ऊर्मीणां छटाभिः, अभिसंहिततमः पूर्णतयाऽभिप्रेतो यः 'समागच्छ विजयस्वे'त्याकारः समयानुरूपोऽनुलापः स पुरस्सरो यस्मिन् कर्मणि तत्तथा आत्मनो ( नरसिंहदेवस्य ) सैन्यस्य हस्तेन संज्ञामाह्वानसंके-तमिव रचयन्तीम्। प्राक्कावेर्या तस्य सैन्यस्य नीराजना विहिता इदानीं च सत्करोतीत्यर्थः। शकुन्यालापेषु समयानुरूपविजयशब्दोच्चारणोत्प्रेक्षा, ऊर्मिषु च हस्तसंज्ञोत्प्रेक्षेति विज्ञेयम्। पुनरपि कावेरीं वर्णयति—

**पन्नगे**ति। पन्नगराजमूर्तिमिव, कावेरीपक्षे-प्रशस्ता पावनी पवित्रता-करी च वृत्तिर्यस्यास्ताम्, पन्नगमूर्तिपक्षे-प्रशस्तेन पावनेन पवनसन्दोहेन वृत्तिर्जीवनं यस्यास्ताम्। शमिजनचित्तवृत्तिमिव, कावेरीपक्षे-अमृतं जलम्, शमिपक्षे-अमृतं मोक्षः, म० म० गिरिधरशर्माणस्तु-निपुणाम्, ऋते सत्ये रुचिमतीमिति शमिपक्षेऽर्थमाचक्षते। शिष्टं स्पष्टम्। शर्वाणीमिव-कावेरीपक्षे-सह्यगिरिः सह्याद्रिः, दृढतरमत्यन्तमित्यर्थः। पार्वतीपक्षे—सह्यः सोढव्यः, रसस्य निधुवनरसस्येत्यर्थः। रामकथामिव कथापक्षे—बहुलैर्हरिभिर्लसिताम्, कावेरीपक्षे-बह्वीभिर्लहरीभिर्लसिताम्। श्लेषेण पुनरपि तमेवार्थमाह—शैलूषीमिव-कावेरीपक्षे-बहुशः तरङ्गेतिच्छेदः, शैलूषीपक्षे-बहुशस्तं यद् रङ्गे नटनं तेन शोभिताम्। अध्यात्मविद्यामिव

त्मविद्यामिव उपनिषद्वरपदस्फुटालक्ष्यहंसगतिम्, प्राज्ञनृप-
सम्पदमिव प्रसाधितदक्षिणाशाम्, नीरदमालिकामिव नियतो-
त्कूलश्यामलतान्विताम्, पावनतापहसितजन्हुकुमारीम्,
पाथोरसावधूतसुधामाधुरीम्, पयोधिराजप्रधानान्तःपुरीम्,
पातकवातन्धयमयूरीम, कावेरीमतारीत्,

कवेरजायाः कलितोरुभोगान् दृष्ट्वा पुरो दक्षिणकूलभागान् ।
वरूथिनीं वर्त्मपरिश्रमार्त्तां निवेशयामास नृपालसिंहः ॥ २१ ॥

अथ तत्र समागत्य वर्तमान-मानव-कुल-सुलभावदानम्,
अनियत-जनाभ्युदय-निदानम्, आयोधनाग्र-निरवग्रहात्युग्र-बल-
समग्रम्, अनतिक्रमणीय-पराक्रमम्, अनुक्रमाक्रान्त-दिशा-चक्रम्

---

कावेरीपक्षे—निषद्वरस्य जम्बालस्य समीपे इत्यर्थः, विद्यापक्षे—श्रेष्ठोपनिषत्पदेषु स्फुटाः स्पष्टा अलक्ष्याः संसारबाह्या ये हंसाः परमहंसास्तेषामेव गतिर्यत्र तादृशी च । प्राज्ञनृपसम्पदमिव प्रकर्षेण साधिता दक्षिणा लाभस्याशा यया ताम्, कावेरीपक्षे स्पष्टम् । नीरदमालिकामिव—कावेरीपक्षे—नियतानान्तरीयकाव-स्थितिरुत्कूला रोधोनाशनी च या श्यामलता प्रियंगुलता तयान्विताम्, नीरदमालापक्षे—नियता योत्कूलाऽत्यन्तं श्यामलता तयान्विताम् । पावनेत्यादि, अन्तःपुरीमित्यादि स्पष्टम् । पातकान्येव वातन्धयाः सर्पास्तेषां मयूरीं कावेरीमतारीत् ।

**कवेरजाया** इति । नृपालसिंहः नरसिंहदेवः कवेरजाया कावेर्याः कलितो-रुभोगान् कलिताः संपादिता उरवो भोगाः सुखानि यैस्तान् ( बहुव्रीहिः ) दक्षिणकूलभागान् पुरो दृष्ट्वा वर्त्मपरिश्रमार्तां वरूथिनीं सेनां निवेशयामास मार्गश्रमापनयनायावासितकटकोऽभूदित्यर्थः । उपजातिच्छन्दः ॥ २१ ॥

**अथेति** । अथ तत्र समागत्य वर्तमानमानवकुले सुलभमवदानं पूर्ववृत्तं कर्म यस्य तम्, अनियतो यो जनानामभ्युदयस्तस्य निदानम् आयोधनाग्रभागे निरवग्रहं निष्प्रतिघं यदत्युग्रं बलं तेन समग्रम्, अनतिक्रमणीयपराक्रमम्,

अतर्कणीय-बृहदुदर्क-निखिलोपक्रमम्, अशेष-जगतीश-कोटीर-दश-प्रकाशित-निदेशम्, अमृताशः-पुर-कृशाङ्गीजनाङ्गीकृत-रमणाशा-पूरण-निपुण-रणाभिनिवेशम्, अवनीशम्, अमुम्, आत्मचार-मुखादाकर्ण्य निर्णीततन्त्रैर्मन्त्रिभिः, गौड-कलिङ्ग-त्रिलिङ्ग-मुख पार्थिवानाम्, अत्याहित-मात्र-फलम्, आहव-कृत्यम्, उदाहृत्य, प्राभृतार्पण-प्रणत्युद्गमप्रणामादिकृत्याय प्रार्थ्यमानः, अपि, प्राकृत-नृप-प्रत्याख्यायि-निज-बल-प्रत्ययेन, तान् अवमत्य तदात्व एव सन्नद्धः, चोलनृपालः केवल-युद्धाय बद्धादरो बभूव।

विज्ञाय चारवदनाद् व्यवसायमस्य
प्रज्ञावतस्तदनु पार्श्वगतानमात्यान्।

---

अनुक्रमं क्रमशः आक्रान्तदिक्चक्रवालम्, अतर्कणीयो बृहँश्च उदर्कः फल येषां तादृशा उपक्रमा यस्य तम्, अशेषजगतीशानां राज्ञां कोटीरदेशे मुकुटप्रान्तदेशे प्रकाशितो निदेशो यस्य तम्, अमृताशाः सुधाभुजो देवास्तेषां पुरस्यामरावत्या यः कृशाङ्गीजनस्तेनाङ्गीकृता या रमणाशा तत्पूरणे निपुणः रणाभिनिवेशो यस्य तम्, एतादृशम् अमुमवनीशं (चोलनृपालः) आत्मचारमुखादाकर्ण्य निर्णीतं तन्त्रं स्वराष्ट्रचिन्ता मन्त्रणा वा यैस्तैस्तादृशै-र्मन्त्रिभिर्गौडकलिङ्गत्रिलिङ्गप्रभृतीनां राज्ञाम् अत्याहितमात्रफलं केवलमहा-भीतिपरिणामम् आहवकृत्यमुदाहृत्य प्राभृतार्पणमुपायनदानम्, प्रणतये उद्गमः प्रत्युद्गजनमभिमुखगमनम्, प्रणामादिकृत्यं च तदर्थं प्रार्थ्यमानोऽपि प्राकृतानां साधारणानां प्रत्याख्यायि यन्निजबलं स्वपराक्रमः स्वसैन्यं वा तत्प्रत्ययेन तत्र विश्वस्तत्वेन तान् मन्त्रिणोऽवमत्य तदात्व एव तदानीमेव सन्नद्धः कृतसन्नाहः चोलनृपालः केवलयुद्धाय बद्धादरो बभूव।

विज्ञायेति। राजसिंहो नरसिंहदेवः चारवदनादस्य व्यवसायं युद्धोद्योगं

आलोक्य सस्मितमवोचत राजसिंहो
योद्धुं प्रयाम वयमप्युचितं किलेति ॥ २२ ॥

उषित्वा तत्रैकामुपशिबिरसीमोद्यदमित-
प्रदीपज्वालौघप्रकटितदिनश्रीरिह निशाम् ।
प्रबुध्य प्रत्यूषे पटुमुखरवैतालिकगिरा
कृतार्हः स्वाचारः क्षितिपतिरगारान्निरगमत् ॥२३॥

प्रस्थानावसरेक्षिणः क्षितिपतीन् प्राग्द्वारि बद्धाञ्जलीन्
प्रत्यञ्जल्यनुकूलवादनयनस्पन्दक्रमैर्मानयन् ।
उर्वीमानमयन्ननीकनिकरैरुद्दामभेरीरवै-
र्द्यामप्युन्नमयँस्ततः प्रववृते धीरः स गन्तुं शनैः॥२४॥

ततः क्रमेण समेधमान-सन्नहन-समुद्भटेषु, नृसिंह-नृप-

---

विज्ञाय तदनु च प्रज्ञावतः पार्श्वगतानमात्याँश्च आलोक्य सस्मितमवोचत यद्वयं योद्धुं प्रयामेदं किलोचितं प्रतिभाति । आहूतस्य रणाय बाहुजस्य प्रत्यावृत्तिरधर्म इत्यर्थः । वसन्ततिलकम् ॥ २२ ॥

**उषित्वे**ति । तत्रोपशिबिरसीममुद्यन्तोऽमिताः प्रदीपास्तेषां ज्वालौघेन प्रकटिता दिनश्रीर्वासरशोभा येन स क्षितिपतिरिह कावेरीतटे एकां निशामुषित्वा प्रत्यूषे प्रातःकाले पटवो मुखराश्च ये वैतालिकास्तेषां गिरा प्रबुध्य, कृता अर्हा उचिताः स्वाचारा येन स तादृशः अगारान्निरगमत् यात्रायै प्रास्थित । शिखरिणी वृत्तम् ॥ २३ ॥

**प्रस्थान**ेति । प्रस्थानस्यावसरमीक्षन्त इति तच्छीलान् प्राग्द्वारि पूर्वदिग्द्वारीत्यर्थः, बद्धाञ्जलीन् क्षितिपतीन् प्रत्यञ्जलिना प्रतिनत्याऽनुकूलवादेन नयनस्पन्देनेति तैः क्रमशः स्वज्येष्ठ-स्वसमान-स्वकनिष्ठान् यथायोग्यं मानयन् अनीकनिकरैरुर्वीमानमयन् उद्दामैर्भेरीरवैश्च द्यामप्युन्नमयन् स धीरस्ततः स्थानात् शनैश्शनैर्गन्तुं प्रववृते प्रचक्रमे । शार्दूलविक्रीडितं छन्दः ॥ २४ ॥

**तत** इति । ततः क्रमेण समेध्यमानानि क्रियमाणानि यानि सन्नहनानि

सैन्यभटेषु, स्वयमपि अनन्य-सामान्य-राजन्य-समुचित-जन्य-तल-जन्य-जय-धन्यताम्, आत्मनः मन्यमानः, मन्द-सिन्धुर-जवन-सैन्धव-विविध-पादात-पङ्क्ति-दन्तुरित-वसुन्धरा-न्तरतया, कन्दलदमन्द-साहसोद्वेलः, चोलनृपालः, सविशेष-रोषः, सरभसमियेष तमभिषेणयितुम् ।

अथ तस्य विश्वम्भरा-सुनासीरस्य, नासीरभुवि केचि-दतिजवोदस्त-भुज-विजय-ध्वज-स्तम्भ तिर्यगवस्थित-मुहुः-प्रण-र्तित-निरस्त-कोश-पट्टिश-पताका-स्थगिताम्बराः, परमप्र-सारितापर-कर दृढ गृहीतानवरत-चालित-फलकतया, प्रति-क्षणम्, आत्मशौर्याशुशुक्षणिं संधुक्षयन्त इव, चिरन्तनाभ्यास-फलितानन्तविधायुध-शिक्षा-विशेष-वैचक्षण्य-जनित-विशद-यशो-धान्यराशिं विशोधयन्त इव च,

---

तैः समुद्भटेषु नृसिंहनृपसैन्यभटेषु सत्सु स्वयमपि अनन्यसामान्याः अनु-पमा ये राजन्यास्तैः समुचितं समभ्यस्तं यज्जन्यं तस्य तलं स्थलं तज्जन्यः ततः समुत्पन्नो यो जयस्तेन धन्यतामात्मनो मन्यमानः, मन्दसिन्धुरा मन्द-गामिनो गजाः, जवनसैन्धवास्तीव्रजवा अश्वा विविधपादाताश्च तेषां पङ्क्त्या दन्तुरितवसुन्धरान्तरतया कन्दलदमन्दं यत्साहसं तेनोद्वेलः चोलनृपालः सविशेषरोषः संस्तमभिषेणयितुं सेनाभिरभियातुमियेषैच्छत् ।

अथेति । अथ तस्य विश्वम्भरासुनासीरस्य नासीरभुवि सेनाग्रभागे केचिद्योद्धारोऽति जवेनोदस्तो यो भुजः स एव विजयध्वजस्तम्भस्तत्र तिर्यग-वस्थितो मुहुःप्रणर्तितश्च यो निरस्तकोशः पट्टिशः स एव पताका तया स्थ-गितान्यम्बराणि यैस्ते तादृशाः, परमप्रसारितो योऽपरः करस्तेन दृढं गृहीत-मनवरतं चालितं च यत् फलकं तस्य भावस्तत्ता तया प्रतिक्षणमात्मशौर्या-शुशुक्षणिं संधुक्षयन्त इव, किञ्च ( चर्मफलकशूर्पवायुभिः ) चिरन्तना-

सन्दर्शन-लालसा-समेत-वृन्दारक-वृन्द-विमानान्तराल-कन्दलित-प्रतिनिनद-रभस-सन्तान-कठोरतर-क्ष्वेडित-घोष-पाटित-प्रकाश-दश-दिशातट-निराकुल-पर्यटद्-विविध-विरुद-यशोवाद-विशेषाः,

रोषावेश-नैष्ठुर्य-दष्ट-निजोष्ठ-पुट-विस्पष्ट-सहज-धाष्ट्र्य-प्रतिष्ठाशा-निरोध-समेधमान-नानायोधन-रस-साधारण-समुन्नत-शिरोधराः, योधाः क्रोधानुरोधात्, प्राधावन्।

प्रतीपवातप्रहतांशुकध्वजाः प्रचेलुरग्रे प्रसभानुधाविनाम्।
प्रधावनाय प्रधनाद्भयङ्करात् प्रचोदयन्तः किल पाणिसंज्ञया २५

---

भ्यासेन फलिता याऽनन्तविधानामायुधानां शिक्षा तस्या यो विशेषस्तस्मिन् यद्वैचक्षण्यं तेन जनितो यो विशदयशोधान्यराशिस्तं विशोधयन्तो निस्तुषी कुर्वन्त इव।

**सन्दर्शनेति**। सन्दर्शनलालसया समेताः: संगताः ये वृन्दारकास्तेषां वृन्दं समूहस्तस्य विमानान्तराले कन्दलितः प्रतिनिनदः प्रतिध्वनिस्तस्य रभससन्तानो वेगप्रवाहस्तेन कठोरतरं यत् क्ष्वेलितं सिंहनादः ( योधानां ) तस्य घोषेण पाटितप्रकाशास्तिरोहितज्ञाना या दशदिशास्तेषां तटेषु प्रान्तेषु निराकुलं पर्यटन् विविधविरुदयशोवादस्य विशेषो येषां तादृशाः,

**रोषेति**। रोषावेशेन नैष्ठुर्येण दष्टं यत् यन्निजोष्ठपुटं तेन विस्पष्टा या सहजस्य स्वाभाविकस्य धाष्टर्यस्य प्रतिष्ठा तस्या आशेच्छा, तस्या यो निरोधस्तेन समेधमानो यो नानायोधनानां विविधयुद्धानां रसस्तेन हेतुना साधारणं यथा स्यात्तथा ( सर्वदैवेत्यर्थः ) समुन्नता उत्थापिता शिरोधरा यैस्ते तादृशा योधाः क्रोधानुरोधात् प्राधावन्।

**प्रतीपवातेति**। प्रसभेन बलादनुधाविनां योधानामग्रे प्रतीपवातप्रहतांशुकाः ध्वजाः भयङ्करात् प्रधनात् पाणिसंज्ञयेव प्रधावनाय प्रचोदयन्तः किल प्रचेलुः, वाताभिहताः सन्तः प्राकम्पन्त ॥ २५ ॥

प्रमदभरप्रकल्पितपरिप्लुतयः प्रधने
　　कतिचन रेजिरे करतलोल्लसितासिलताः ।
विबुधवधूजनाय वियति प्रतिपालयते
　　वरवरणोत्पलस्रजमिवार्पयितुं त्वरिताः ॥ २६ ॥
कुण्डलीकृतकोदण्डकुहरान्तर्गता भटाः ।
आदरादमरीभिः प्रागासन् क्रोडीकृता इव ॥ २७ ॥

अतर्ज्य-नमुचि-निर्मथित-नगर-निर्मलांशुमुखी-जन-नर्मानुकूल-वर-निर्माण-कार्मण-रजोगुणोन्मेष-समान-धर्मणा, निखिलास्त्र-वार्य-वीर्य-वैर्यवनीपति-वर्य-निर्मर्याद मद-दुर्योग-तिमिर-निर्यातन-चातुर्य-शौर्य-सूर्योदय-सान्ध्यराग-पर्यायेण बाहुबल-बहुविधोत्साह-साहस-दोहदोद्दाम-महाहव-वर-सरोरुह-किसलय-

---

**प्रमदभरे**ति । प्रमदभरप्रकल्पितोत्कूर्दनाः करतलोल्लासितासिलताः कतिचन योधा वियति वरवरणसंबन्ध्युत्पलस्रजमर्पयितुं प्रतिपालयते प्रतीक्षमाणाय विबुधवधूजनाय तमुद्दिश्य ('क्रियया यमभिप्रैति सोऽपि संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी ) त्वरिता इव रेजिरे । वधूभिरात्मनि स्रजमारोपयितुं त्वरमाणा इत्यर्थः । नर्कुटकं वृत्तम् ॥ २६ ॥

**कुण्डलीकृते**ति। कुण्डलीकृतो यः कोदण्डो धनुः तस्य कुहरान्तर्गता भटा आदरादमरीभिः प्राक् प्रथमत एव क्रोडीकृता भुजान्तरगृहीता इवासन् अनुष्टुब्वृत्तम् ॥ २७ ॥

अतर्ज्यो यो नमुचेर्निर्मथितं येन तादृशो महेन्द्रस्तस्य नगरममरावती तत्रत्यानां निर्मलांशुमुखीजनानां शशिमुखीनां स्त्रीणां कृते नर्मानुकूलानां वराणां निर्माणे कार्मणरूपो यो रजोगुणोन्मेषस्तत्समानो धर्मो यस्य तेन, निखिलैरस्त्रैर्वार्यं वीर्यं येषां तादृशा ये वैर्यवनीपतिवर्यास्तेषां निर्मर्यादो यो मददुर्योगो मदव्याधिः स एव तिमिरं तस्य निर्यातने यच्चातुर्यं शौर्यं च तदेव सूर्योदयस्तस्य सान्ध्यरागस्तत्पर्यायेण । बाहुबलं, बहु-

सन्दोह-सन्देह-निर्वाहकेण रणाटोप-पाटलिम्ना, वीराणां वदनराजीवानि रराजिरे।

विजयानक-निध्वान-श्रवण-विवर्धमान-सम्मद-समृद्धि-निरन्तर-स्पर्धावकाशैरिव बहिः प्रकाशमानैः, समुच्चलद्धर्म-जल-निर्झर-सेक-सविशेष-पोषित-साहस-रसाङ्कुर-सङ्काशैः, पुलकजालकैरलङ्कृतनिखिलाङ्गाः, शात्रव-दर्शनमात्र-सरभस-प्रस्थित-रोष-परुष-निर्भर्त्सनालाप-त्वरित-पदार्पण-संभ्रमेणेव कम्पमानाधरपुटाः, ससंभ्रमांसतटास्फालन-डम्बर-डंभ-संभावनीय-भुज-स्तम्भ शिखर-पेटक-शय-गम्भीर-शौर्य-कुम्भीनस-विबोध-संभ्रमाः, निर्निमेष-विस्तारित-वृत्तातिरक्त-नेत्रतया

---

विधोत्साहः, साहसं, दोहदश्चैभिरुद्दामो यो महाहववरः स एव सरोरुहं तस्य किसलयानां सन्दोहस्य समूहस्य निर्वाहकेण रणाटोपस्य पाटलिम्ना वीराणां वदनराजीवानि रराजिरे शुशुभिरे। अत्र मुखपाटलिमा बहुधोत्प्रेक्षितः।

**विजयेति**। विजयानन्दनिध्वानस्य श्रवणेन विवर्धमानो यः सम्मदस्तस्य समृद्धिस्तया निरन्तरं या स्पर्धा तस्या अवकाशैरिव बहिःप्रकाशमानैः, समुच्चलन्तो ये घर्मजलनिर्झरास्तेषां सेकेन सविशेषं पोषिता ये साहसरसाङ्कुरास्तत्सङ्काशैः, पुलकजालकैरलङ्कृतनिखिलाङ्गाः, शात्रवाणां दर्शनमात्रेण सरभसं प्रस्थितं ( भावे क्तः ) रोषेण परुषो यो निर्भर्त्सनालापश्च तेन त्वरितं यत्पदार्पणं तत्संभ्रमेणेव कम्पमानानि अधरपुटानि येषां ते, संभ्रमसहितेन संवेगेन यत् अंसतटस्याऽऽस्फालनं तस्य डम्बरडम्भेन आडम्बराधिक्येन सम्भावनीयो यत् स्तम्भसदृशभुजस्य शिखरं स्कन्धः स एव पेटकं तत्र शयनकर्तृ गम्भीरशौर्यमेव कुम्भीनसः सर्पस्तस्य विबोधस्य संभ्रमो व्यापारो येषु ते तादृशाः, निर्निमेषं विस्तारितं यत् वृत्तमतिरक्तं च नेत्रं तस्य भावस्तत्ता

पुरस्तादवष्टब्ध-निस्तलारुण-फलकेन, ललाटतटी-घटित-स्फुट-तर-भ्रकुटी-कपटोदस्त-कृपाणिका-समुद्भटेन, कोपाटोपेनैव, निर्भरमखिलान्निर्भेदयन्तः समन्ततो ववल्गुः ।

उदग्र-समर-रसाक्रान्त-विक्रान्ताः, प्रतिक्षणोन्मीलदुत्साह-सम्मद-प्रवर्त्यमान-गात्रोदञ्चित-रोमाञ्च-सूचिकाञ्चल-च्छिद्रित-कञ्चुकतया, समक्ष-समर-मुख-बहुविध-वैचक्षण्य-दिदृक्षु-सर्वाङ्गीण-जयलक्ष्मी-नव-गवाक्ष-कक्ष्यामपरोक्षयन्तः, सम्पराय-सम्भ्रममाण-सुभट-सन्नाह-समुन्नमित-पुलक-धन्य-निज-कर्ण-मूल-निर्णीत-पर-राजन्य-सैन्य-जय-रमाभ्यर्णागमन-कर्णेजप-सन्देश-वर्णावली-समाकर्णन-रसाः, सत्वर-नृत्यदलिक-पार्श्व-युग-दृश्यमानोन्मस्तक-युद्ध-कुतूहलोद्यमं विरोधि-मा-स्वतारभटीं प्रकटीचक्रुः ।

---

तया पुरस्तात् पुरोभागेऽवष्टब्धं निस्तलं वर्त्तुलमरुणं च चर्मफलकं यैस्तादृशाः, ललाटतटीघटिता तत्र संपृक्ता या स्फुटतरा भ्रकुटी तस्याः कपटेनोदस्ता या कृपाणिका तया समुद्भटेन कोपाटोपेनैव निर्भरं पर्याप्तमखिलान्निर्भेदयन्तः समन्ततो ववल्गुः बभ्रमुः । एतेन क्रोधातिशयो द्योतितः ।

**उदग्रेति** । उदग्रसमररसेनाऽऽक्रान्तं विक्रान्तं पराक्रमो येषां ते, प्रतिक्षणमुन्मीलन् य उत्साहस्तेन यः संमदस्तेन प्रवर्त्यमाना ये गात्रादुदञ्चिता रोमाञ्चास्त एव सूचिकास्तासामञ्चलेन प्रान्तेन छिद्रितकञ्चुकतया भिन्नकवचतया समक्षं यः समरस्तस्य मुखे प्रारम्भे यद् बहुविधं वैचक्षण्यं तद्दिदृक्षुर्या सर्वाङ्गीणा जयलक्ष्मीस्तस्या नवगवाक्षयुक्ता या कक्षा प्रकोष्ठगृहं तामपरोक्षयन्तः प्रत्यक्षीकारयन्तः, सम्पराये युद्धे सम्भ्रममाणा ये सुभटास्तेषां सन्नाहे समुन्नमितानि यानि पुलकानि तैर्धन्यं यन्निजकर्णमूलं तेन निर्णीतः पराजन्यसैन्यानां (पराजयात् प्राप्ता) या जयरमा तस्या अभ्यर्णमागमनस्य

प्रत्यालीढनमत्क्षमातलमिलत्पाताललीनोरग-
व्राताश्वासिधनुर्धरध्वनिगलद्विश्वम्भरासंधयः ।
प्रध्नन्तः शरपञ्जरं जयरमाकीरीविहारोचितं
धानुष्काः सचमत्क्रिया ववलिरे धैर्यं तु नैषां क्वचित् २६

समुन्मिषित-संमदभरोत्ताल-वैतालिक-लोक-समुद्घोषित-विविध-विरुद-वाद-मेदुर-'जय-जीव'-निस्वन-पुरस्सर-निस्साण-रणित-श्रवण-सम-समयमेव मिथस्सम्मुखीनतया, चचाल, सकलमपि तदुभयबलम् ।

ततः सरभसोदस्त-निशित-सृणि-प्रशस्त-हस्त सन्नद्ध-स्कन्ध-

---

कर्णेजपा या सन्देशवर्णावली तस्याः समाकर्णने रसो येषां ते, सत्वरं नृत्य-बदलिकपार्श्वयुगं तेन दृश्यमानं निरीक्ष्यमाणम् उन्मस्तकं मस्तकमुच्चैः कृत्वा मस्तकं विरहय्य युद्धकुतूहलोद्यमं विरोधिनां मासु लक्ष्मीषु या बलात् स्वता-रभटीस्वत्वाधिकारः तां च प्रकटीचक्रुः ।

**प्रत्यालीढे**ति—प्रत्यालीढमासनविशेषस्तेन नमत् यत् क्षमातलन्तेन मिलत् यत् पाताले लीनानामुरगाणां व्रातं समूहस्तस्याऽऽश्वासी यो धनुषां धराणां पर्वतानां च ध्वनिः टङ्कस्तत्प्रतिध्वनिरूपस्तेन गलन् विश्वम्भरायाः पृथिव्याः संधियैस्तादृशाः, जयरमाकीरीविहारोचितं शरपञ्जरं प्रध्नन्तश्च सचमत्क्रिया धानुष्काः ववलिरे व्यचलन् तेषां धैर्यं तु न ववले न व्यचलत् । शार्दूलविक्रीडितं छन्दः ॥ २६ ॥

**समुन्मिषिते**ति । सकलमपि तदुभयबलं समुन्मिषितो यः संमदभर आनन्दभरस्तेनोत्तालो यो वैतालिकलोकस्तेन समुद्घोषितो यो विविध-विरुदवादस्तेन मेदुरः स्निग्धो यो जयजीवेत्यादिरूपो निःस्वनः स पुरस्सरो यस्य तादृशं यत् निःशाणस्य रणितं तस्य श्रवणसमसमयमेव मिथः सम्मुखी-भावेन चचाल पदानि निचिक्षेप ।

**तत** इति । ततो निस्साणराणो निस्ससार । कीदृशो निस्साणराण इति

पीठ-सुस्थित-हस्तिपक-पदाग्र-मुहुस्ताडित-श्रोत्रमूलातिमात्र-विसृत्वर-सत्वर-गमन-महत्तर-पदाग्र-समाक्रमणात्युग्र-कराग्रोदस्त-मुद्गर-जागृताहवाग्रह-महामद-वेतण्ड-मण्डलानवरताहिण्डमान-चण्ड-मणिघण्टा-घणत्करणाकुण्ठतर-कण्ठगुहा-वहमान-घोष-चण्डिम-पिचण्डिलः,

शालिहोत्र-सूत्र-विशारद-सादिवर-पार्ष्णि स्पर्शमात्र-विद्रवदशेष-वाजि-परिषदकलुष-हर्ष-हेषित-घोष-विशेष-पोषितोन्मेषः, चटुल-पटुतर-पर्यटन-प्रकटिताटोप-पाटित-वसुधा-तट-महाभट-पेटकारभटी-समुद्घाटित-क्ष्वेडित-प्रौढ-रटित-परिपाटी-समाटीकन-नाटित-

---

तं वर्णयति—सरभसमुदस्ता निशिताः सृणयो यैस्तादृशाः प्रशस्ता हस्ता येषां ते तादृशाः सन्नद्धेषु स्कन्धपीठेषु सुस्थिता ये हस्तिपकास्तेषां पदाग्रैर्मुहुस्ताडितानि श्रोत्रमूलानि येषाम्, तथाऽतिमात्रं विसृत्वरे सत्वरगमनेन महत्तरे च पदाग्रे समाक्रमणं यस्य तादृशेनात्युग्रेण कराग्रेणोदस्तो यो मुद्गरस्तेन जाग्रन् आहवाग्रहो येषां ते च ते महामदवेतण्डा हस्तिनस्तेषां यत् मण्डलं तस्यानवरतमाहिण्डमाना याश्चण्डा मणिघण्टास्तासां घणत्करणेनाकुण्ठतराः प्रचण्डा याः कण्ठगुहास्ताभ्यो वहमान आविर्भवन् यो घोषस्तस्य यश्चण्डिमा तेन पिचण्डिलः प्रवृद्धः।

**शालिहोत्रे**ति। शालिहोत्रप्रणीतेषु अश्वशास्त्रसूत्रेषु विशारदा ये सादिवरा अश्ववारास्तेषां पार्ष्णिस्पर्शमात्रेण विद्रवन्तो धावन्तो येऽशेषा वाजिनस्तेषां परिषत्तस्या अकलुषो निर्मलो यो हर्षस्तत्सहितो यो हेषितः घोषविशेषस्तेन पोषित उन्मेषो यस्य तादृशः, चटुलं स्फूर्तिमत् पटुतरं च यत् पर्यटनं तेन प्रकटितो य आरोप आडम्बरस्तेन पाटितं वसुधातटं (लं) यैस्तादृशा ये महाभटास्त एव पेटका मञ्जूषास्तेषां यदारभट्या संभ्रमेण समुद्घाटितं समुद्घाटनं तद्रूपं यत् क्ष्वेलितस्य सिंहनादस्य रटितं तस्य या परिपाटी तस्याः समाटीकनमनुकरणं तेन नाटितं काटवपाटवं येन तादृशः;

काटव-पाटवः, समुद्गल-सैन्यद्वयान्तर-सम-समय-ताडयमान-भेरी-पटह-काहल-मर्द्दलानद्ध-ढक्का-मुरज हुडुक्का-वेणु-मृदङ्ग शृङ्ग-पूर्व-सर्व-वाद्य-निध्वान-भर-समृद्धाङ्गः, संवर्त-समय-निर्वर्त्तित-तत्तत्तागिति-समुद्धत-नृत्त-क्रमाभियुक्त-विधूर्त्तसकरोत्तम्भित परि-वर्त्तमान-महत्तर-डमरु निर्गत्वर-डिमडिम-ध्वनित-समृद्धि-पद्धत्य-ध्वनीनः ।

वृद्धश्रवः-पुरस्सर-स्वर्धाम-प्रार्थित-पत्त्ररथाधिप-ध्वज-कर-तलोन्नद्ध-मन्थान-वसुन्धराधर-मथ्यमान-दुग्ध-महाब्धि-मध्य-निबध्यमान-समुद्धत-निध्वान-वैदग्ध्य-समुद्धरण सिद्धान्त-सन्नद्धः, शुम्भ-निशुम्भ-विजृम्भमाण-संरम्भ-कुम्भिनीधर-संभे-दन-दम्भोलि-धारायित-भुज-स्तम्भ-शाम्भवीकराम्भोरुह-समुत्त-

---

समुद्गलं मुद्गलाः पटहवादकास्तत्सहितं यत्सैन्यद्वयान्तरं तत्र समसमयं ताड्यमानानि यानि भेरीपटहशृङ्गपूर्वाणि सर्ववाद्यानि तेषां निध्वानभरेण समृद्धमङ्गं यस्य तादृशः, संवर्त्तसमयः प्रलयकालः ( 'संवर्त्तः प्रलयः कल्प' इत्यमरः ) तत्र निर्वर्तितो जनितो यः " तत्तत्तग् " इतिरूपोत्युद्धतो ध्वनि-स्तदनुसारं यो नृत्तक्रमस्तत्राभियोगवान् यो विधूर्त्तसकरः शिवस्तेनोत्तम्भितः परिवर्त्तमानश्च यो महत्तरो डमरुस्तस्मान्निर्गत्वरो यो 'डिम-डिम' इतिध्वनि-स्तस्य या समृद्धिस्तस्याः पद्धतेरध्वनीनोऽनुकारी ।

**वृद्धश्रवा** इति । वृद्धश्रवाः सुनासीरः पुरस्सरो येषु तादृशा ये स्वर्धा-मानो देवास्तैः प्रार्थितो यः पत्त्ररथाधिपध्वजो गरुडध्वजो विष्णुस्तस्य कर-तलेनोन्नद्धो यो मन्थानभूतो वसुन्धराधरो मन्दराचलस्तेन मथ्यमानो यो दुग्धमहाब्धिस्तन्मध्ये निबध्यमानः पिण्ड्यमानो यः समुद्धतो निध्वानस्तद्वै-दग्ध्यस्य समुद्धरणाय यः सिद्धान्तो दृढनिश्चयस्तत्र सन्नद्धः, शुम्भनिशुम्भौ दैत्यविशेषौ तयोः विजृम्भमाणो यः संरम्भः स एव कुम्भिनीधरो महीधर-स्तस्य संभेदेन दम्भोलिधारायितो वज्रायितो भुजस्तम्भो यस्यास्तादृशी या

म्भित-शार्ङ्ग गम्भीर निनद-संभ्रमाहंभाव-संभावनावष्टम्भ-शुभदारम्भः, पुराण-घोणवर-घोर-घोणा-मुख-विनिर्गत-निर्घात-निर्घृण-घर्घर-घुर्घराराव-मुहुर्घटिति-दैर्घ्य-महार्घः,

तीक्ष्णतर-नखर-प्रक्ष्वेडन-विक्षोभित-हिरण्यकशिपु-रक्षो-वर-वक्षोन्तर-वीक्षण-रूक्ष-नृहर्यक्ष-कण्ठ-गुहाक्ष-क्ष्वेडित-ललित-वैचक्षण्य-लक्षण-विचक्षणः, दिवि दिक्षु क्षोणीतले चान्तरिक्ष-गुणाद्वैतमेव समक्षयन्, अक्षीणतया तत्क्षणमेव निस्ससार निस्साण-राणः,

अनन्तरमरविन्द-भव-नन्दनेना(प्या)नीत-सुधा-रस-गरि-माणं महती-रव-मधुरिमाणम्, अनभिनन्द्य, अत्यन्त-परुषाणा-

---

शाम्भवी दुर्गादेवी तस्याः कराम्भोरुहैः समुत्तम्भितमुत्तोलितं यच्छार्ङ्गधनुस्तस्य गंभीरो यो निनदस्तस्य यः संभ्रमेण संवेगेनाहम्भावः कोऽन्योऽस्ति सदृशो ममेतिविचारस्तस्य संभावनाया अवष्टम्भाय नाशाय शुभद आरम्भो यस्य तादृशः, पुराणो यो घोणवर आदिवराहस्तस्य घोणातो नासिकातः मुखाच्च विनिर्गतो यो निर्घातनिर्घृणः घर्घरः कठोरो घुर्घुरारावस्तस्य या मुहुर्घटितिर्भूयोभूयः संघटनं तस्यापि यद्दैर्घ्यं तद्वन्महार्घो दुर्लभः।

तीक्ष्णतरेति। तीक्ष्णतराणि यानि नखराणि तैः प्रक्ष्वेलनेन च विक्षुब्धो यो हिरण्यकशिपुरक्षोवरस्तस्य वक्षोन्तरवीक्षणेन रूक्षो निःस्नेहः कठोरश्च यो नृहर्यक्षो नृसिंहस्तस्य कण्ठगुहाक्षे कण्ठदरीशरीरे यत् क्ष्वेलितं तेन ललितं यद् वैचक्षण्यस्य लक्षणं प्रत्यायनं तस्मिन् विचक्षणो निपुणः, दिवि दिक्षु क्षोणीतले चान्तरिक्षगुणस्य शब्दस्याद्वैतमेव समक्षयन्नाविर्भावयन्, अक्षीणतया तत्क्षणमेव निःशाणानामातोद्यानां राणो निस्ससार निर्जगाम।

अनन्तरमिति। अनन्तरं शब्दश्रवणानन्तरमरविन्दभवस्य ब्रह्मणो नन्दनेन सूनुना नारदेनाप्यानीतसुधारसगरिमाणं महतीरवमधुरिमाणमनभि-

मारवाणामाकर्णनाय मनागुन्मनायितमाहव-पटह-जन्मनाम् ।

समन्ततो युगपदास्कन्दन्निव हरिदन्तराणि, निरुन्धन्निव वसुन्धरा-धर-रन्ध्राणि, निश्शेषमाचामन्निव विरोचन-मरीचिकाः, कुक्षौ निक्षिपन्निवान्तरिक्षम्, उत्तम्भयन्निव विश्वम्भरा-वलयम्, विष्टम्भयन्निव पवन-विजृम्भणम्, संताडयन्निव प्राक्-प्रत्यगादि-दिशा-स्थानानि, प्रस्थापयन्निव परापर-व्यवस्थाम्, नीलनिचोलो नभो-मणि-दर्पणस्य, कालायस-धिष्ण्यं ककुबन्त-दन्तिनाम्, नीली-जालपूरो नील-लोहित-पटानाम्, अन्धकार-सन्ततिरभिसृत्वर-सुर-मत्तकाशिनीनाम, नेपथ्य-विशेषो निर्गत्वर-कबन्ध-नर्त्तन-विधीनाम्, अन्तर्गृहान्तरमखिल-जन्तूनाम्, वज्र-पञ्जरं वरंवर-सुभट-व्यवसित-पतगानाम्, करीष-चूर्ण-राशिर्घन-यशः-कलमानाम्, पंगुमिव, मूकमिव, अन्धमिव, बधिरमिव, स्तब्धमिव, बद्धमिव, मुद्रितमिव, चित्रितमिव,

---

नन्धात्यन्तपरुषाणामाहवपटहजन्मनामारवाणामाकर्णनाय मनागुन्मनायितम् इति संबन्धः । स्पष्टोर्थः ।

अथ युद्धरेणुं वर्णयति । समन्ततो युगपदास्कन्दन्निव हरिदन्तराणीत्यादि रेणुभरमित्यन्त सर्वं स्पष्टम् । विशेषशब्दाः व्याख्यासापेक्षपदानि चोल्लिख्यन्ते-विरोचनः सूर्यः, सन्ताडयन्निव संकोचयन्निव, प्रस्थापयन्निव दूरीकुर्वन्निवेति यावत् । धिष्ण्यं निवासगृहम्, नेपथ्यविशेषो जवनिकान्तरस्थितिविशेषो निर्गत्वराः ये कबन्धनर्तनविधयस्तेषां कृते । वरं व्रियन्त इति वरंवरा ते च ते सुभटास्तेषां व्यवसितान्येव पतगास्तेषाम् घनं विपुलं यद्यशः करीषराशिः क्षेत्रे प्रक्षेपणीयो शुष्कगोमयादिर्धान्यवृद्धिकरः पदार्थसञ्चयः । अखिललोकमक्रियाकर्माकलयन् क्रियाजन्यं कर्मक्रियाकर्म तन्नभवति यत्र तादृशमाकलयन् निदधन् । अत्र मूलपुस्तकस्थं पद्यद्वयं त्रुटितपदं वाक्यार्थदानासमर्थमिति

अखिलं लोकमक्रियाकर्माकलयन्ननीकयोरुभयोरुदियाय रेणुभरः।

संख्याश्चर्यदिदृक्षयेव हरितस्सर्वास्समेत्यामिलन्
वीरोद्वाहवलत्सुरीततिभराद्व्योम व्यनंसीदिव ।
यामालिङ्गितुमुद्ययाविव मुदा धात्री खलापातनात्
भारो मेऽद्य गमिष्यतीति परितः पांसूत्करैर्जृम्भिते ३०

संग्रामाङ्गणसंचरज्जयरमासान्निध्यधूमोद्गमः
कीर्तिश्वेतगरुद्विहारविपिनं कीलालवर्षाम्बुदः ।
स्वःस्त्रीवीरविवाहसाक्षिसुमहाशौर्याग्निधूमच्छटा
संचक्राम ततः क्रमेण हरितां चक्रं रजःकन्दली ॥३१॥

नागा नागान्नैकगर्जाऽतिरेकैरश्वानश्वा हर्षहेषाप्रकर्षैः ।

---

व्याख्यानमुपेक्षितम्, भूमिकायां त्रुटितभागसहितं पद्यद्वयमपि मुद्रयेत, स्वयं त्रुटितपूरणं तु चीनांशुके शणयोगाभं स्यादिति त्यज्यते ।

**संख्ये**ति । परितः पांसूत्करे जृम्भिते सति, संख्यस्य युद्धस्य यदाश्चर्यं तस्य दिदृक्षयेव सर्वा हरितः समेत्यामिलन्, वीराणामुद्वाहाय वलन्तीनां सुरीणां ततेर्भराद् व्योम व्यनंसीदिव नीचैरागतमिवालक्ष्यत, धात्री पृथ्वी यामालिङ्गितुमुद्ययाविव, कुतस्तत्राह–खलानामापातनात् नाशनाद्धेतोः अद्य मे भारो व्यपेष्यतीति मुदा । शार्दूलविक्रीडितं छन्दः ॥ ३० ॥

**संग्राम**ेति । ततो रजःकन्दली रजोभरः क्रमेण हरितां चक्रं दिङ्मण्डलं संचक्राम, या रजःकन्दली संग्रामाङ्गणे संचरन्ती या तेजोमयी प्रभामयी वा जयरमा तस्याः सान्निध्यसूचको धूमोद्गम इव, किञ्च कीर्तिरेव श्वेतगरुत् हंसस्तस्य विहाराय विपिनमिव, कीलालस्य शोणितस्य या वर्षा तस्या अम्बुद इव किंच स्वर्लोकस्त्रीणां वीरैः सह यो विवाहस्तत्र साक्षि यत् सुमहत् शौर्यं तदेवाग्निस्तस्य धूमच्छटेवासीत् । शार्दूलविक्रीडितं छन्दः ॥ ३१ ॥

**नाग**ेति । नागा हस्तिनः नैकगर्जातिरेकैः प्रवृद्धैरनेकगर्जनैः स्वापरज्ञाः सन्तो नागान् हस्तिनः एवम् अश्वा हर्षेण या हेषा तस्याः प्रकर्षैः स्वापरज्ञाः

योधा योधान् युक्तभाषाविशेषैः प्रौढे रेणौ प्राहरन् स्वापरज्ञाः ३२

परस्पर-विविधायुध-प्रहार-पात्यमान-सुभट-गात्र-कन्दलिता परितः प्रवहन्ती, रुधिर-स्रवन्ती, पवन-वशोद्गत-परागोत्कर-परीततया परिणमदन्धकार-निबन्धिनीनां पन्थानमरुन्ध सान्ध्य-रुचाम् ।

नासीरवीरतरवारिविदारितारि-
धारालघोररुधिरौघतरङ्गिणीभिः ।
दृप्यद्द्विपेन्द्रकरशीकरसान्द्रदान-
पाथोभरैरपि परागभरश्शशाम ॥ ३३ ॥

समुद्धत-सुभट-व्रात-परस्पराभिपात-समय-समुदित-द्वेडित-

---

सन्तोऽश्वान् योधाश्च युक्ताः प्रयुक्ता ये भाषाविशेषास्तैः कृत्वा स्वापरज्ञाः स्वं परं च परिचिन्वन्तः । प्रौढे रेणौ प्राहरन् । शालिनी छन्दः ॥ ३२ ॥

**परस्परे**ति । अथ परस्परं विविधायुधानां प्रहारः पात्यमानानां सुभटानां गात्रैः कन्दलिता परितः प्रवहन्ती या रुधिरस्रवन्ती शोणितनदी सा पवनवशोद्गतपरागोत्करपरीततया हेतुभूतया परिणमन् जलावसेकेन शान्तिमुपगच्छन् योऽन्धकारस्तन्निबन्धिनीनां तन्मूलिकानां सान्ध्यरुचां पन्थानम् अरुन्ध, स्वेनैव कार्यसिद्धेस्तत्प्रसारस्यानावश्यकतामसाधयदित्यर्थः । सन्ध्या यथा घनान्धकारसध्रीची भवति रक्ता च तथा शोणितनद्यपि रक्ता परागोत्करसपृक्ता चासीदिति भावः ।

**नासीरे**ति । स परागभरः नासीरे ये वीरास्तेषां तरवारिभिर्विदारिता येऽरयस्तैर्धारालो घोरश्च रुधिरौघस्तस्य तरङ्गिणीभिः, दृप्यतां द्विपेन्द्राणां करशीकरैः शुण्डाजलैः सान्द्रदानपाथोभरैश्च शशाम । वसन्ततिलकं वृत्तम्॥ ३३॥

**समुद्धते**ति । समुद्धता ये सुभटास्तेषां व्रातं तस्य यः परस्परमभिपातः सम्प्रहारस्तत्समये समुदितानि समूहतामापन्नानि यानि द्वेडितरटितद्रुत-

रटित-द्रुत-मुख-समाहूत-पुरुहूत-पुर-शातोदरी-जात-लीलायित-जात-विविध-विलोकित-विद्योतासिताम्बुजात-दाम-परिवीतोद्धृत-कृपाणलता-दीधिति-धोरणी-स्तम्भ-शत-सूचित-प्रतिनवादितेय-भावोचित-नाकान्तर-निर्माणोद्यमम्, अन्धीकृत-हरिदन्तराल-रजोन्धकार-निकर-सद्योजात-खद्योत-विद्योतमान-वल्गित-खाड्गिक-निरर्गल-खड्गाखड्गि-पुङ्खानुपुङ्खि-तरङ्गित-स्फुलिङ्ग-दुर्लङ्घ्य-प्रताप-शिखि-भयङ्करम्, सीमाधिक-परधामालोकन-सामाजिक-वैमानिक-वामालक-विमुक्त-कल्पद्रुम-पुष्प-स्तबक-निष्पतित-पुष्पन्धय-पक्ष-पवन-तत्क्षण-कृत-सन्धुक्षण-कोपाशु-

---

मुखानि समाह्वानपलायितप्रभृतीनि कर्माणि तैः समाहूता याः पुरुहूतपुरस्य स्वर्गस्य शातोदर्यः कृशोदर्यस्ताभ्यो जातमुत्पन्नं यल्लीलायितजातं विलाससमूहः, तस्मिन् यद्विविधं विलोकितं कटाक्षप्रभृति तस्य विद्योताः प्रकाशा एवासिताम्बुजातानि तेषां दामानि मालास्तैः परिवीता या उद्धृताः कृपाणलतास्तासां या दीधितिधोरण्यः किरणपरम्परास्ता एव स्तम्भशतं तेन सूचितं यत् प्रतिनवादितेयभावोचितस्य(युद्धनिहतवीराणाम्)अभिनवदेवत्वानुरूपस्य नाकान्तरस्य स्वर्गान्तरस्य निर्माणोद्यमो यत्र तत् तादृशं संगरमभूदिति दूरेणान्वयः। (संगरशब्दस्य पुंस्त्वेऽपि क्लीबप्रयोगश्चिन्त्यः)। अन्धीकृतं हरिदन्तरालं येन तादृशं यद्रजस्तदेवान्धकारस्तस्य सन्निकटे सद्योजातखद्योता इव विद्योतमानाः, वल्गितखाड्गिकानां चटुलखड्गधारिणां निरर्गलं खड्गाखड्गि पुङ्खानुपुङ्खि च युद्धं तेन तरङ्गिता उल्लसिता ये स्फुलिङ्गास्तैर्दुर्लङ्घ्यो यः प्रतापशिखी प्रतापानलस्तेन भयङ्करम्, सीमाधिकं यत् परधाम तस्यालोकनाय सामाजिकादर्शकत्वमापन्ना या वैमानिकानां वामास्तासामलकेभ्यो विमुक्तानि यानि कल्पद्रुमपुष्पाणि तेषां स्तबकेभ्यो निष्पतिता ये पुष्पन्धया भ्रमरास्तेषां पक्षाः तेषां पवनैस्तत्क्षणं कृतं संधुक्षणं प्रदीपनं

शुक्षणि-दुर्लक्ष्य-साधु-धानुष्क-कर-परिष्क्रियायित-चाप-चक्र-निर्गत्वर-विशिख-निचय-खचिताङ्ग-वीर-वर-वर्ग-समुद्घाटित-दुर्ललित-शल्य-मृग-समुल्लसनम् ,

प्रचण्ड-मद-कण्डूल-भुजदण्ड-वीर-प्रकाण्ड-करतलाहिण्डित-मण्डलाग्र-खण्डित-सपत्न-षण्ड-भेदित-मार्तण्ड-साक्षात्कृतान्तरित-सौधोपलक्ष्य-सहस्राक्ष-सरसिजाक्षी-रण-निरीक्षण-कनक-गवाक्ष-वैचक्षण्यम् , अक्षीण-विजयलक्ष्मी-पण-जिघृक्षया लक्षित-लगुडाक्ष-विक्षेपैः, नृपति-लक्षैः, परस्परमूरीकृत-योध-शारी-निपात-कौतुकम् , कबन्ध-नर्तनानुकूल-फालित-नरकपाल-युगलताल-रवोत्ताल-वेताल-बहल-हलाहलि-काकल-कल-परिहृत-रोदनभूत-राज-बालकम् , सरसतर-रसास्वदन-

---

यस्य तादृशो यः कोपाशुशुक्षणिः क्रोधानलस्तेन दुर्लक्ष्या ये साधवः सिद्धहस्ता धानुष्कास्तेषां करास्तेषां परिष्क्रिया भूषणं तद्वदाचरितं यच्चापचक्रं धनुर्मण्डलं तस्मान्निर्गत्वरा ये विशिखनिचया बाणसमूहास्तैः खचिताङ्गा ये वीरवरास्तेषां वर्गेण समुद्घाटितं प्रकटितं दुर्ललितस्य गृहपालितस्य शल्यमृगस्य शल्यकस्य समुल्लसनमाविर्भावो यत्र तत् ।

प्रचण्डेति । प्रचण्डमदकण्डूला भुजदण्डा येषां ते च ते वीरप्रकाण्डास्तेषां करतलैराहिण्डितानि पातितानि यानि मण्डलाग्राणि खड्गास्तैः खण्डिता ये सपत्नषण्डाः शत्रुसमूहास्तैर्भेदितं यन्मार्तण्डमण्डलं तेन साक्षात्कृतम्, अन्तरितं गुप्तं यत्सौधं तत्रोपलक्ष्याणां सहस्राक्षस्य सरसिजाक्ष्याः शच्या रणनिरीक्षणाय कनकगवाक्षाणां वैचक्षण्यं यत्र तत् । अक्षीणा या विजयलक्ष्मीः सैव पणस्तस्य जिघृक्षा तया लक्षिता ये लगुडा एवाक्षास्तेषां ये विक्षेपास्तैः कृत्वा, नृपतिलक्षैः कर्तृभिः, परस्परमूरीकृतं शारीनिपातकौतुकं यत्र तत् । कबन्धनर्तनस्यानुकूलं यथा स्यात्तथा फालिता विदारिता ये नरकपालास्तेषां युगलमेव तालं वाद्यविशेषस्तस्य रवेणोत्तालास्तेषां हलाहलिकाकल-

गर्धन-गृध्रमिथुन-चञ्चल-चञ्चु-संदंशिकाञ्चल-समुद्धृतान्त्र-मालिकान्तर-लम्बमान मानव-कलेवर-तनुतर-दोला-मञ्चका-न्तरालाधिरोपित-बालकोपलालन-लोल-नीलाक्ष-काकोलिका-गानाकर्णन-रसावमानित-रुधिर-पानावधान-यातुधानम् ,

आकृष्ट-गरिष्ठ-वेतण्ड-मण्डलाभिः, निपतित-चर्म-वितति-निर्मित कूर्मसाधर्म्याभिः, विभ्रष्ट-पट्टिशारित्र-हस्त-रात्रिंचर-कुमारक-केलि-चाल्यमानानेकप-गात्र-यान-पात्राभिः, अतितुमुल-कल-कल-बहलित-लहरि-वेगाभिरापगाभिरसृङ्मयीभिरनवरत-समेधमानावरोध-महायोध-यशः-पयोधि-वरम् ,

---

कलेन प्रपतनाघोषरवेण परिहृतं रोदनं यैस्तादृशा भूतराजानां बालकाः यत्र तत् । सरसतररसस्यास्वादने गर्धनं यस्य तादृग् यत् गृध्रमिथुनं तस्य चञ्चल-चञ्चुरेव संदंशिकाञ्चलस्तेन समुद्धृता याऽन्त्रमालिका तदन्तरे लम्बमानानि यानि मानवानां कलेवराणि तेषां तनुतरा या दोलास्ता एव मञ्चकास्तदन्त-रालाधिरोपिता ये बालकास्तेषामुपलालनलोला या नीलाक्षाः काकोलिकाः पिशाचिनीविशेषास्तासां गानाकर्णनरसेनावमानितं रुधिरपानेऽवधानमेकाग्रता यैस्तादृशा यातुधाना यत्र तत् ।

**आकृष्टेति** । आकृष्टानि गरिष्ठानि अतिगुरूणि वेतण्डमण्डलानि हस्तिसमूहा याभिस्ताभिः, निपतितानि यानि चर्माणि चर्मफलकानि तेषां विततिस्तया निर्मितं कूर्मसाधर्म्यं याभिस्ताभिः, विभ्रष्टा ये पट्टिशास्त एव अरित्राणि केनिपातास्तानि हस्तेषु येषां तादृशा ये रात्रिञ्चरकुमारकास्तैः केलिभिश्चाल्यमानान्यनेकपगात्राण्येव यानपात्राणि पोता यासु ताभिः, अति-तुमुलं यत्कलकलं तेन बहलिततराः लहरिवेगा यासु ताभिः, असृङ्मयीभिः रुधिरप्रचुराभिः आपगाभिः नदीभिरनवरतं समेधमानोवरोधो-ऽन्तःपुरं यस्य तादृशो महायोधानां यशःपयोधिवरो यत्र तत् । यथा प्राकृत-नदीभिः प्रकृतपयोनिधेरन्तःपुरमेधते तासां तत्पत्नीत्वात्, तथा यशोरूप-

कान्तारमिव खड्गिकुलपरिवृतम्, अमरोद्यानमिव आविष्कृतकल्पागमाटोपम्, अतलमिव अनन्तबलिशोभितम्, पयोधिसलिलमिव प्रकटितभङ्गोदयम्, वसन्तदिनमिव वितीर्णसुकरवीरसौमनस्यम्, वर्षागममिव वर्धिताप्सरोवरलाभम्, स्वयंवर-भवनाङ्गणं सुराङ्गनानाम्, सुकृत-परिणामः शूराणाम्, आहार-मण्डपमनीहार-कर-कुमारकस्य, क्रीडावनं कीर्ति-लतिकानाम्, जनन-सदनं जयेन्दिरायाः, निकष-शिला पौरुषकनकस्य, -दुर्मद-पद-संहरणोपबृंहित-सिंह-नाद-भञ्जित-रोदसी-शृंगाटकम्, अतिभयङ्करं संगरमभूत्।

व्यूहावुभौ तौ विहितोरुघोषौ वितेनतुर्विग्रहमाग्रहेण ।

---

पयोनिधिरन्तःपुरं रुधिरापगाभिरेधते, तासां तत्साहाय्यसंपादकत्वात् ।

**कान्तारमिति** । संगरपक्षे-खड्गिनः-खड्गधारिणः, कान्तारपक्षे-गण्डकाः । अमरोद्यानमिव-संगरपक्षे-आविष्कृतः कल्पस्य कल्पान्तरस्या गमाटोपो येन तत्, उद्यानपक्षे-आविष्कृतः कल्पागमैः कल्पवृक्षैः, अगमाः वृक्षाः न गच्छन्तीति, ('पलाशी द्रुद्रुमागमाः' इत्यमरः) आटोपो यत्र तत् । अतलमिव-संगरपक्षे-अनन्तैर्बलवद्भिः शोभितम्, अतलपक्षे-अनन्तेन शेषनागेन बलिराजेन च शोभितम् । पयोधिसलिलमिव-संगरपक्षे-प्रकटितौ भङ्गोदयौ जयपराजयौ येन तत्, पयोधिपक्षे-भङ्गा ऊर्मयस्तेषामुदयो यत्र तत् । वसन्तदिनमिव-संगरपक्षे-वितीर्णं सुकरं सुलभं वीराणां सौमनस्यं देवत्वं यत्र तत्, दिनपक्षे-शोभनानां करवीराणां सौमनस्यं यत्र तत् । वर्षागममिव-संगरपक्षे स्पष्टम्, वर्षापक्षे-वर्धिता आपो यत्र तादृशानि सरोवराणि तेषां लाभो यत्र तत्, अनीहारकरः सूर्यस्तत्कुमारको यमस्तस्य । दुर्मद इति पदं दुर्मदपदं तस्य संहरणायोपबृंहितो यः सिंहनादस्तेन भञ्जितं रोदस्योः शृङ्गाटकं यत्र तादृशम् । अतिभयङ्करं संगरमभूत् । शिष्टं स्पष्टम् ।

**व्यूहाविति** । विहितोरुघोषौ तावुभौ व्यूहौ संवर्त्तः प्रलयस्तत्र निः-

संवर्त्तनिस्सीमसमीरवेगसंघट्यमानाविव सानुमन्तौ ॥३४॥
परिवहत्क्षतजौघपतच्चमूभटभुजोरुपदावयवा मही ।
ततदवाग्निगलत्तरुशाखिकाप्रसवपर्णफलेव वनी बभौ ॥३५॥

निशिततर-कृपाण-निकृत्त-हास्तिक-मस्तक-विस्रस्त-मौक्तिक-जाल-पाण्डर-तण्डुल-भरितानि, कालायस-शिरस्त्र-पात्राणि, प्रत्यग्र-तरस-खण्डांगार-संगतायां नैस्त्रिंशिक-पात्र-प्रघटिताङ्गार-धान्यामधिरोप्य मुखार्पित-विसृष्ट-शुण्डाखण्ड-नलक-मुख-वहमानैः पवमानैः, पातित-सैन्धव-जंघा-काण्डेन्धनं प्रज्ज्वलयन्त्यो रजनिचर-कुमारिका बालिकोचित-पाक-केलिकामाकलयन् । प्रत्यग्र-रक्तपान-समुद्रिक्त-प्रमत्त-लीला-

---

सीमो यः समीरवेगस्तेन संघट्यमानौ अन्योन्यं प्रहरमाणौ शिखरिणाविवाग्रहेण विग्रहं वितेनतुः। उपजातिच्छन्दः ॥ ३४ ॥

**परिवहदिति** । परिवहत् यत् क्षतजं तस्यौघस्तत्र पतन्तो ये चमूचरा भटास्तेषां भुजोरुपदादयोऽवयवा यस्यां सा मही, ततेन दवाग्निना गलन्ति तरूणां शाखिकाप्रसूनपर्णफलानि यस्यां सा वनीव बभौ । द्रुतविलम्बितं छन्दः ॥ ३५ ॥

**निशिततरेति** । निशिततरैः कृपाणैर्निकृत्तानि यानि हास्तिकस्य हस्तिसमूहस्य मस्तकानि तेभ्यो विस्रस्तानि यानि मौक्तिकजालानि तान्येव तण्डुलानि तैर्भरितानि, कालायसस्य शिरस्त्राण्येव पात्राणि, प्रत्यग्रं नवीनं यत्तरसं मांसं तस्य खण्डः स एवाङ्गारस्तेन संगतायां सहितायां, नैस्त्रिंशिकाः खड्गप्रहारिणः तद्रूपायां पात्रप्रघटिताऽङ्गारधान्यामधिरोप्य, मुखार्पितस्ततो विसृष्टश्च यः शुण्डाखण्डः स एव नलकस्तेन वहमानैः पवमानैर्वायुभिः, पातितानि सैन्धवानामश्वानां जङ्घाकाण्डान्येवेन्धनं तत्प्रज्वलयन्त्यो रजनिचरराजकुमारिका बालिकोचितां पाकक्रीडामाकलयन् । किञ्च—प्रत्यग्रस्य रक्तस्य पानेन समुद्रिक्ताः प्रमत्ता लीलया आलोकः प्रेक्षणव्यापारो

लोक-वेताल-बालक-हस्ततल-प्रतिक्षणोत्क्षिप्यमाण-प्रशस्त-योध-
वर-मस्तक-मध्यान्तराल-समिन्धन-प्रवृत्त-निम्नानुसन्धान-पर-
कबन्ध-सन्ततिरन्धकान्तक-वर-गर्व-मन्थर-दशकन्धर-भूमिका-
मन्वकार्षीत् ।

कोपाटोपाच्चोलभूपालको दुष्-,प्रापानेकानेकपानीकपार्श्वः ।
आगाद्वेगादभ्यमित्रं जिगीषुश्, छागैः साकं केसरीन्द्रं करीव ३६

दन्ताञ्चल-सन्दानित-कुन्ताः, समुद्दण्ड-शुण्डाकाण्ड-
परिहिण्डमान-परिघ-दण्डाः, घण्टा-घणात्करोपबृंहित-बृंहित-
रवोपसंहृताम्बुधर-रंहसः, वीर-रस-समिद्ध-समिद्धर-समुद्धुराः,
गन्धसिन्धुराः, मद-धारा-धोरणी-सारणी-प्लावित-वसुन्धराः,

---

येषां तादृशाश्च ये वेतालबालकास्तेषां हस्ततलैः प्रतिक्षणमुत्क्षिप्यमाणानि प्रशस्तयोधवराणां मस्तकानि तेषां मध्यान्तरालस्य समिन्धने संचूरणे प्रवृत्ता निम्नानुसंधानपरा च या कबन्धसन्ततिः सा अन्धकान्तकात् भवात् वरप्राप्तेर्गर्वेण मन्थरस्य दशकन्धरस्य भूमिकामन्वकार्षीत् ।

**कोपेति** । कोपस्याऽऽटोपात् चोलभूपालकः दुष्प्रापानेकानीकपानीकपार्श्वः दुर्लभासंख्यकरिगणसनाथवरुथिनीसहितो जिगीषुश्च सन् वेगाद्, अभ्यमित्रं शत्रुसम्मुखं, छागैः साकं केसरीन्द्रं जिगीषुः करीवागात् । शालिनी वृत्तम् ॥ ३६ ॥

**दन्ताञ्चलेति** । दन्ताञ्चले दन्तप्रान्ते सन्दानिता बद्धाः कुन्ता येषां ते, समुद्दण्डे शुण्डाकाण्डे परिहिण्डमानः परिघदण्डो येषां ते, घण्टानां घणात्कारोपबृंहितो यो बृंहितरवस्तेनोपसंहृतो विनाशितोऽम्बुधराणां रंहो गर्जनवेगो यैस्ते, वीररससमिद्धा या समितो युद्धस्य धरा तस्यां समुद्धुराः गन्धसिन्धुराः मत्तमातङ्गाः, मदधाराया धोरणी परिपाटी तया ( प्रवर्त्तिता ) या सारणी तया प्लावितवसुन्धरा यैस्ते । संचरच्चुञ्चवो वराश्च येऽञ्जन-

संचर-चुञ्चुवराञ्जन-गिरि-कूट-संघाटाः, संगरकेलिसरः प्रविश्य मृणाल-काण्डानीव बाहुदण्डानुन्मूलयन्तः, घन-तरोरु-काण्डै-रम्भा-स्तम्भ-सम्भावनामुत्तम्भयन्तः, क्रोध-रस-पुष्कल-वदन-पुष्कराणि पुष्कराग्रेण निष्करुणं निष्पीडयन्तः, वीर-वर-धैर्य-वारि-पूरमाविलयन्तः, सरभसं मांस-मेदो मस्तिष्क-पङ्क-शेषम-कुर्वन् ।

विपक्षवक्षोनिहितैकपादैश्शिरांसि दूरं चरणान्तरेण ।
समुत्क्षिपद्भिः सरयं गजेन्द्रैः कृतानि किं कन्दुकखेलनानि ३७

रणमहितलपात्रे कालरात्र्या प्रभोक्त्र्या
परिहितपरिषेकप्रक्रियां स्मारयन्तः ।
पदयुगलगृहीतान् भ्रामयन्ति स्म तूर्णं
वमदुरुरुधिरौघान् वैरिवीरान् कराग्रैः ॥ ३८ ॥

---

गिरयस्तेषां कूटवत् संघाटो वपुः संघटनं येषां ते तादृशाः करिवराः संगर एव केलिसरस्तत्प्रविश्य घनतरैरुरुकाण्डैरम्भास्तम्भानां सम्भावनामुत्तम्भयन्त उत्पादयन्तः (करिणः) मृणालकाण्डानीव योधानां बाहुदण्डानुन्मूलयन्तः क्रोधरसपुष्कलानि वदनपुष्कराणि पुष्कराग्रेण शुण्डा-ग्रेण निष्करुणं निष्पीडयन्तः वीरवरधैर्यमेव वारिपूरो यत्र तादृशं संगररूपं केलिसरः प्रविश्याविलयन्तः सरभसं सत्वरं मांसमेदोमस्तिष्कपङ्कशेषमकुर्वन् ।

विपक्षेति । विपक्षाणां वक्षसि निहित एकपादो यैस्तैर्गजेन्द्रैः शिरांसि (विपक्षाणामेव) चरणान्तरेणेतरपादेन दूरं सरयमुत्क्षिपद्भिः सद्भिः किं तदानीं कन्दुकखेलनानि कृतानीत्युत्प्रेक्षा ।उपेन्द्रवज्रा वृत्तम् ॥३७॥

रणमिति । रणमहितलमेव पात्रं तस्मिन् प्रभोक्त्र्या भोजिन्या काल-रात्र्या परिहिता विहिता या परिषेकप्रक्रिया तां स्मारयन्तः करिणः पद-

वेतण्डेनो वाहमेकं कराग्रात्
विक्षिप्याभाद्व्योम्नि दन्तेन भिन्दन् ।
विध्यन्नूर्ध्वं विभ्रमेणैव वीरो
वेगोत्क्षिप्तं नालिकेरं कुठार्या ॥ ३९ ॥

निपात्योर्व्यां किञ्चिन्निजपदकुलाक्रान्तचरणं
करे धृत्वान्याङ्घ्रिं कटुचटुचटात्कारमुखरम् ।
प्रचण्डो वेतण्डः प्रसहमवकर्षन् विरुरुचे
जरासन्धं भिन्दन् रणभुवि मरुन्नन्दन इव ॥ ४० ॥

भीतं प्रमीतं समरादपेतं वीतंसमध्ये किल चेष्टमानम् ।

---

युगलाभ्यां ( करणाभ्यां ) गृहीतान् धारितान् वमदुरुरुधिरौघान् वैरिवीरान् तूर्णं भ्रामयन्ति स्म । मालिनी वृत्तम् ॥ ३८ ॥

**वेतण्डेन** इति । वेतण्डानामिनः स्वामी कश्चिद् गन्धसिन्धुर एकं वाहमश्वं कराग्रात् शुण्डाग्रेण व्योम्नि विक्षिप्य तत्रैव दन्तेन भिन्दन् दारयन् वेगोत्क्षिप्तं नालिकेरं विभ्रमेण विलासेन ऊर्ध्वमेव स्थापितं सत् कुठार्या विध्यन् वीर इवाभात् भाति स्म । शालिनी वृत्तम् ॥ ३९ ॥

**निपात्येति** । कश्चित् प्रचण्डो वेतण्डः कञ्चिद्वैरिवीरमुर्व्यां निपात्य, निजपदकुलेनाक्रान्तं चरणं यथा स्यात्तथेति क्रियाविशेषणम्, एवमन्यत्रापि । अन्यच्चाङ्घ्रिं करेण शुण्डया धृत्वा गृहीत्वा कटुः दुःखदो वीरस्य चटुः प्रियश्च करिणो यश्चटात्कारस्तेन मुखरं यथा स्यात्तथा, प्रसहं प्रसह्यावकर्षयन् जरासन्धं भिन्दन् मरुन्नन्दन इव भीम इव रणभुवि विरुरुचे शुशुभे । शिखरिणी वृत्तम् ॥ ४० ॥

**भीतमिति** । भीतं प्रमीतं मृतकल्पं समरादपेतं पलायमानं वीतंसमध्ये बन्धनोपकरणमध्ये ( 'वीतंसस्तूपकरणे बन्धने मृगपक्षिणाम्'

चैतन्यशून्यं सकलं स्वसैन्यं त्रातुं नृसिंहस्तरसाऽऽजगाम ४१

आरुह्य स्वयमपि हस्तिनं महान्तं
सन्नद्धः सपदि स एष राजसिंहः ।
हस्ताग्रस्फुरदसिरभ्यगादरातीन्
आश्वास्य स्वबलममर्षयोगमात्रात् ॥ ४२ ॥

अभ्येत्य चिरात्त-गर्जितमूर्ध्वोदस्त-मस्तकतया समस्तमपि नभस्तटं युगपदापिबतेव कुञ्जरेन्द्रेण कुपित-कुण्डलि-वरोद्दण्डया शुण्डया, कुलिश-कर्कश-निशितान्तेन दन्तेन, चालित-वसुमतीचक्रैश्चरण-चक्रैः, दण्डधर-भुज-काण्डाभिधेन बालधिना, निर्जित-निर्घात-समुत्करेण मुद्गरेण च विभञ्जित-

---

इत्यमरः ) चेष्टमानं चैतन्यशून्यं चेतनाहीनं सकलं स्वसैन्यं त्रातुं नृसिंहदेवस्तरसाऽऽजगामाभ्युपेयाय । इन्द्रवज्रा वृत्तम् ॥ ४१ ॥

आरुह्येति । स्वयमपि महान्तं हस्तिनमारुह्य सन्नद्धः सपदि स एष राजसिंहो नरसिंहदेवो हस्ताग्रस्फुरदसिः सन् स्वबलममर्षयोगमात्रात् क्रोधदर्शनेनैवाश्वास्य ( ' तस्याबन्ध्यकोपत्वात्तत्सैन्यानि सद्य एव विजयो भविष्यतीत्याश्वस्तानि बभूवुरिति भावः' ) अरातीन् अभ्यगात् अभिदुद्राव । प्रहर्षिणी छन्दः ॥ ४२ ॥

अभ्येत्य समागत्य ( स नृसिंहदेवः ) चिरेणाऽऽत्तं गृहीतं गर्जितं येन तं तादृशं समस्तमपि नभस्तटमूर्ध्वमुदस्तं यन्मस्तकं तस्य भावस्तत्ता तया युगपदापिबतेव कुञ्जरेन्द्रेण साधकतमेन, कुपितो यः कुण्डलिवरस्तद्वदुद्दण्डया शुण्डया, कुलिशवत्कर्कशो निशितश्चान्तो यस्य तेन तादृशेन दन्तेन, चालितवसुमतीचक्रैः कम्पितभूमण्डलैश्चरणचक्रैः, दण्डधरस्य यमस्य भुजकाण्डोऽभिधापर्यायो यस्य तेन ( यद्वा अभिख्येनेति पाठस्तेन ) तादृशेन बालधिना ( बालेनेति मूले पाठोऽभूत् ) निर्जितो निर्घातानां प्रहाराणां समुत्करो येन तादृशेन शुण्डाग्रनद्धेन मुद्गरेण च विभञ्जितः कुन्तधारिपुरुष-

कौन्तिक सञ्चयम्, विवशित-प्रासिकम्, विरत-निखिल-पार-श्वधिकम्, विनिष्कासित-धानुष्कम्, निषूदित-निषादि-वरम्, निबर्हित-सादि-गणम्, निर्मथित-चार्मिकम्, निर्गलदान्त्र-मौद्गरिकम्, नियान्त्रित-वैजयन्तिकम्, निष्पीडित-घोटकम्, निर्गन्धित-सिन्धुरम्, निखिलमपि तदनीकं निरवशेषमकार्षीत्।

प्रथमशिखरवर्त्ती विकर्त्तन इव महस्ततिभिस्तमस्तोमं महाहस्तिवरमस्तकगतो विशिखस्तबकैः समस्तमपि शात्रव-बलं विद्राव्य स पार्थिववरः, सम्मुखीनतया समापतन्तं समन्ततो बाणसन्ततिं वर्षन्तं चोलनरेन्द्रमन्तकान्तक इव जलन्धरं रघुकुलधुरन्धर इव पङ्क्तिकन्धरं सरभसमाभिजगाम।

अन्यूनमन्यूदयदुर्निरीक्षा-
वन्योन्यजन्योन्नतिवादलोलौ।

---

सञ्चयो यत्र तत्, विवशिताः विवशाः सञ्जाताः किमपि कर्त्तुमक्षमाः प्रासिका यत्र तत्, विरतनिखिलपारश्वधिकम्, विनिष्कासितधानुष्कम्, निषूदितनिषादिवरम्, निबर्हितसादिगणम्, निर्मथितचार्मिकं नाशितफलक-धारिपुरुषम्, निर्गलन्त्यन्त्राणि येषां तादृशा मौद्गरिका यत्र तत्, नियन्त्रिता वैजयन्तिकाः पताकाधारिणो यत्र तत्, निष्पीडितघोटकम्, निर्गन्धिता गत-मदा विहिताः सिन्धुरा यत्र तत् तादृशं निखिलमपि तदनीकं निरवशेषमकार्षीत्।

**प्रथमे**ति। प्रथमशिखरवर्त्ती विकर्त्तनः सूर्यो महस्ततिभिस्तमस्तोममिव हस्तिवरमस्तकगतः स पार्थिववरो विशिखस्तबकैः शात्रवबलं विद्राव्य चोल-नरेन्द्रमभिजगामेतिसंबन्धः। विकर्त्तनः भास्करः। विशिखाः बाणाः। अन्त-कान्तकः शिवः। जलन्धरो दैत्यविशेषः। पङ्क्तिकन्धरो दशकन्धरः (रावणः)। शिष्टं स्पष्टम्।

**अन्यूने**ति। अन्यूनो यो मन्युः कोपस्तेन दुर्निरीक्षौ, अन्योन्यं या

प्रकृष्टमाप्तुं प्रतिचक्रतुस्ता-
वदृष्टपूर्वैरखिलास्त्रमार्गैः ॥ ४३ ॥

हस्तेन हस्तमवकृष्य रदौ रदाभ्यां
संघट्य निष्ठुरहतिस्फुरितस्फुलिङ्गम् ।
घण्टानिनादमुखरौ करिणौ तदीयौ
चण्डाहवक्रमचमत्करणं व्यधत्ताम् ॥ ४४ ॥

घणघणनिक्वणत्कनकघण्टमकुण्ठपद-
क्रममयतस्तदीयकरिणः पृथुकुम्भतटे ।
गुह इव क्रौञ्चशैलभुवि शक्तिमतित्वरया
व्यमुचत कुन्तमन्तिकचरान्तकमान्तरगम् ॥ ४५ ॥

तदा कुन्त-सन्ताडन-च्छिद्रित-हस्ति-मस्तकोदित्वरीसमौ-क्तिक-रक्तझरी तारानुबन्धिनी संध्येव चोलेन्द्र-भुज-प्रताप-

---

जन्ये उन्नतिरुत्कर्षः स एव वादस्तत्र लोलावभिलाषुकौ । अदृष्टपूर्वैरखिलास्त्र-मार्गैः प्रकृष्टं जयमाप्तुं प्रतिचक्रतुः प्रतीकारं कृतवन्तौ । उपजातिच्छन्दः॥४३॥

**हस्तेने**ति । हस्तेन हस्तमवकृष्य रदौ दन्तौ रदाभ्यां च संघट्य निष्ठुरहतिस्फुरितस्फुलिङ्गं यथा स्यात्तथा तदीयौ करिणौ चण्डाहवक्रमे चमत्करणं व्यधत्ताम् । स्पष्टम् । वसन्ततिलकं वृत्तम् ॥ ४४ ॥

**घणघणे**ति । घणघणेतिशब्दायमाना कनकघण्टा यत्र तद्यथा स्यात्तथा ' किंचाकुण्ठपदक्रमं यथा स्यात्तथाऽयतो गच्छतस्तदीयकरिणश्चोल-भूपालहस्तिनः पृथुकुम्भतटेऽतित्वरया क्रौञ्चशैलभुवि गुहः शक्तिमिव कार्ति-केयः स्वकीयमस्त्रविशेषमिव नृसिंहदेवोऽन्तिकचराणां कृतेऽन्तकमान्तरे गच्छ-तीति तं च कुन्तं ( कुम्भतटे ) व्यमुचत प्राहरत् । नर्कुटकं छन्दः—"हय-दशभिर्नजौभजजलागुरुनर्कुटक"मितिलक्षणात् ॥ ४५ ॥

**तदे**ति । कुन्तच्छिद्रितमस्तकादुदित्वरी समौक्तिका रक्तझरी तारावती

गभस्तिमदस्तमय-समयं स्वयमनन्तरमाचचक्षे । तदा किञ्चि-दाकुञ्चित-जानु-युगम्, अचलचल-पुष्करम्, अनुन्मीलित-लोचनम्, अनवगताङ्कुश-सूचनम्, अंसकमवनमयति हास्तिप-तावपरावतार-नरसिंहो नरसिंहभूपालश्चोलेन्द्रं कञ्चुकिनमिव वैनतेयः कुञ्जरमिव पञ्चमुखः सारङ्गमिव चित्राङ्गो जीवग्राहं जग्राह ।

तस्मिन्क्षणे तस्य चमूसमूहस्तत्रास कुत्रापि पदं न लब्ध्वा ।
प्रचण्डवाताहतपद्मपत्रपारिप्लवाम्भःकणिकाप्रकारः ॥ ४६ ॥
गृहीतमात्रे युधि चोलभूपे कृपानिधिः श्रीनरसिंहदेवः ।
स तां न्यषेधत् समरात्स्वसेनां सतां प्रसादः सहजो न रोषः ४७

तदनुकराल-करवाल-दलित-महाबल-कुम्भ-मूलोत्कूल-समुल्लसितालीन-विमल-मौक्तिक-जाल-लीला-वाचालेन, अति-

---

सन्ध्येव चोलेन्द्रभुजप्रताप एव गभस्तिमांस्तस्यास्तमयसमयमाह स्म । हस्तिपतौ मूर्च्छिते सति स्कन्धञ्चावनमयति सति, न अपरोऽवतारो यस्य तादृशो नरसिंहः सारङ्गं हरिणं, चित्राङ्गो द्वीपीव, जीवग्राहं जग्राह। स्पष्टमन्यत् ।

**तस्मिन्निति** । तस्मिन्क्षणे तस्य चोलभूपालस्य चमूसमूहः कुत्रापि पदं न लब्ध्वा प्रचण्डवाताहतपद्मपत्रस्थितचपलजलकणिकायाः प्रकार इव प्रकारो यस्य तत्सदृशः सँस्तत्रास त्रासमाप्तवान् । उपजातिच्छन्दः ॥४६॥

**गृहीतेति** । युधि संग्रामे चोलभूपे गृहीतमात्रे सत्येव कृपापारावारो नरसिंहदेवस्त स्वसेनां समरान्न्यवारयत्, यतः सतां प्रसाद एव सहजो भवति रोषस्त्वाकस्मिक इति उपेन्द्रवज्राच्छन्दः ॥ ४७ ॥

**तदन्विति** । तदनु करालकरवालेन दलिता ये महाबला द्विपास्तेषां कुम्भः शिरोदेशस्तस्य मूलं तस्योत्कूलेन कूलोत्खननेन समुल्लसितानां प्रकटीभूतानामालीनानामन्तर्निहितानां मौक्तिकानां जालस्य लीलायाः

मानुष-पौरुषोन्मेष-तोषित-दिविषदभिवृष्ट-कुसुमवर्ष-विसृत-मधुरसविशेष-शेमुषी-पुषा, सविध-गत-विविध-विरुद-बल-निशमन-कन्दलदान्तर-स्मितानन्दाङ्कुर-नन्दनीयेन, निदाघ-जल-बिन्दु-निकरेण, तारकित-वदन-चन्द्रः, समर-रमा-समागम-प्रत्युद्गमायेव समुद्गतपुलकोत्करः,

परिश्रमापनिनीषु-निज-श्री-कर-सरस-चालित-लीला-सरोरुह-पराग-विसरैरिव रजोनिकरैः धूसरित-कपोलदेशः, हर्ष-भर-परिपोष-वित्रुटित-तनुत्रान्तर-दृश्यमान-घर्मित-गात्र-बिम्बित-नैकटिकानेक-लोकतया प्रदर्शित-विश्वरूप इव विश्व-म्भरः, विगत-संरम्भतया निष्कम्प इव महाम्भोराशिः, विश्व-म्भरा-वरः, विरत-सांपराययापि विजयोदयविजृम्भिताधिक-

---

शोभाया वाचालेन सूचकेन, अतिमानुषं यत्पौरुषं तस्योन्मेषस्तेन तोषिता ये दिविषदस्तैरभिवृष्टं यत् कुसुमवर्षं तेन विसृतो यो मधुरसविशेषो मकरन्दातिरेकस्तस्य शेमुषीं पुष्णातीति तेन तत्सदृशेनेत्यर्थः। सविधगता ये मनुजास्तैर्गीतो विविधो विरुदो यस्य तादृग् यद्बलं तस्य निशमनेनाकर्णनेन कन्दलयदान्तरं स्मितमानन्दश्च तयोरङ्कुरवन्नन्दनीयेन निदाघजलबिन्दुनिकरेण स्वेदाम्भसा तारकाः संजाता अस्मिन्निति तारकितः, तादृशो वदनचन्द्रो यस्य सः। स्पष्टमन्यत्।

**परिश्रमे**ति। परिश्रमापनयनेच्छावती या निजश्रीः स्वराज्यलक्ष्मीस्तस्याः करेण सरसं यथा स्यात्तथा चालितं यल्लीलासरोरुहं व्यजनीभूतं, तस्य परागविसररिव रजोनिकरैः संग्रामाङ्गणलग्नैर्धूसरितः कपोलदेशो यस्य स तादृशः। हर्षभरपोषेण हेतुना वित्रुटितस्य तनुत्रस्य कवचस्यान्तरे दृश्यमानं घर्मितं यद्गात्रं तत्र बिम्बितो यो निकटवर्त्तिजनसमुदायस्तस्य भावस्तत्ता तया प्रदर्शितविश्वरूपो विश्वम्भरो विष्णुरिव। विरतसंरम्भतया निष्कम्पो

संभ्रमया वरूथिन्या पाथोरुहाधीश इवाभीषुपरम्परया प्रकाशमानः प्रविवेश तदानीमेव तदीयराजधानीम् ।

अथावगत्य वार्त्तामिमामुत्त्रास-भय-समुताम्यदाशयस्तदानीमेव हित्वा समस्तापत्य-कलत्रामात्य-भृत्य-धरित्र्यादिक-वस्तुजातं 'कुत्राधुना परित्रातुमसून् विद्रवामी'ति कर्त्तव्यं किमप्यविदित्वा विमुक्त इव निरुद्ध इव विप्रलब्ध इव वर्त्तमानो मरुवप्र-पाकशासनो निपत्य समुद्र-तीर-मध्ये कुत्राप्यदुद्रवत्। तदनु विहस्य नरसिंहमहेश्वरः प्रविश्य मधुरापुरीं तत्रत्य-नृपोपदीकृत-समस्त-वस्तुजातः, रामेश्वर-प्रणिनंसया सेतुमार्गेण निर्जगाम ।

निर्गच्छन्ननन्त-सरणि-लङ्घन-जङ्घाल-तरङ्ग-तुरङ्गम-संघात-निरङ्कुश-गमन-भङ्गि-घाटक-हाटक-कशा-विशारद-समीर-

---

महाम्भोराशिरिव, विश्वम्भराया वरो वसुधाया ईश्वरः स नरसिंहदेवः विरतसांपराययया शान्तसंगरयाऽपि विजयोदयाभ्यां जयाभ्युदयाभ्यां विजृम्भितोऽधिकः संभ्रमो यस्यास्तादृश्या वरूथिन्या सेनया अभीषुपरम्परया किरणमालया पाथोरुहाणामधीशः सूर्य इव प्रकाशमानः स विश्वम्भरावरस्तदानीमेव तदीयराजधानीं प्रविवेश ।

**अथेति** । अथेमां वार्त्तामवगत्योत्त्रासभयाभ्यां समुत्ताम्यन्नाशयोऽन्तरङ्गं यस्य तादृशो मरुवप्रदेशस्य पाकशासनः समद्रतीरमध्ये निपत्य कुत्राप्यदुद्रवत् । तदनु नरसिंहमहेश्वरो विहस्य ( तदुपरि ) मधुरापुरीं ( सांप्रतं 'मदुरे'ति विख्यातां) प्रविश्य तत्रत्यनृपेण दीयमानोपदाः स्वीकृत्य श्रीरामेश्वरभगवन्तं प्रणन्तुमिच्छया सेतुबन्धाभिमुखं ययौ । शिष्टं स्पष्टम् ।

**निर्गच्छन्निति** । अथ तेन मार्गेण निर्गच्छन् स समुद्रमद्राक्षीदिति दूरेणान्वयः । कीदृशं समुद्रम्—अनन्ता अन्तरहिता निरवधिरनन्त आकाशमेव वा सरणिस्तस्या लङ्घने जङ्घाला यात्राधुरन्धरा ये तरङ्गतुरङ्गमास्तेषां

वशोन्निद्र-विद्रुमलता-वितानम्, अभङ्गुर-रसोत्तरङ्गित-गङ्गादि-मापगाङ्गना-समालिङ्गन-शृङ्गार-पुङ्खानुपुङ्ख-पुलकाङ्कुर-शङ्काकर-बुद्बुद-न्यर्बुदम्, आकाशतल-लेहि-नौ-कान्तार-कूपकाञ्चल-पताका-निभादाकारित-पाकाहितैरिव मैनाकादिभिरचलैराकांक्षित-निवासम्, उपरि-निरस्त-शीकर-स्तोम-निस्तल-मुक्ताफल-विकरण-व्यस्त-मुख शुक्ति-पुट-प्रशस्तैः, अम्बु-स्तम्बेरम-हस्तोन्मूलित-विस्तृत-पुण्डरीक-स्तबकानुकार-निरायस्तैः, अनल्प-मथन-प्रकार-पारिप्लव-कल्पपादप विभ्रष्ट-पुष्ट-कलिका-विकल्पैः, निज-

---

संघातस्य यन्निरङ्कुशं गमनं तद्भङ्गयास्तद्रचनाया घाटिका निर्मात्र्यो या हाटकस्य सुवर्णस्य कशास्तद्वद्विशारदाः समीरवशोन्निद्रा विद्रुमलतानां विताना यत्र तादृशं, विद्रुमलतावितानाः लहरीतुरङ्गाणां प्रेरणायै हाटककशायिता आसन्नित्यर्थः। अभङ्गुरो यो रसस्तेनोत्तरङ्गिता या गङ्गा आदिमा यासु ता गङ्गादिमा आपगास्ता एव सागराङ्गनास्तदालिङ्गनेन यः शृङ्गाररसस्तस्य पुंङ्खानुपुंङ्खं परम्परातो यत् पुलकाङ्कुरं तच्छङ्काकरं बुद्बुदानां न्यर्बुदं गणनातीतं बुद्बुदा यत्र तम्—आकाशतललेहिनानां नौकानामन्तरे मध्ये ये कूपकाः गुणवृक्षका रज्जुबन्धनकाष्ठानि तेषामञ्चलेषु याः पताकाः वस्त्रखण्डरूपा ध्वजाः तेषां निभात् व्याजात् आकारितपाकशासनैरिव मैनाकाद्यचलैराकाङ्क्षित-निवासम्। पुनः कीदृशं समुद्रं फेनजालैरलंकृतम्। कीदृशैः फेनजालैरिति तानि वर्णयति उपरि निरस्ता ये शीकरस्तोमास्त एव निस्तलानि वर्तुलानि ( वर्तुलं निस्तलं वृत्तमित्यमरः) यानि मुक्ताफलानि तेषां विकरणेन व्यस्तमुखानि यानि शुक्तिपुटानि तैरिव प्रशस्तैः।

अम्बुस्तम्बेरमा जलहस्तिनस्तेषां हस्तोन्मूलिता ये विस्तृतपुण्डरीक स्तबकास्तेषामनुकारतत्परैरित्यर्थः, अनल्पमत्यधिकं यन्मथनं तस्य प्रकारा

नदराज-पद-समुत्तेजन-कार्मण-निर्मल-चामर-सधर्मभिः, वरुण-गृह-वितान-दुकूलैः, वनमालि-शयन-कुलैः, तन्नाभि-विधि-मरालैः, फेनजालैरलङ्कृतम् ।

स्वर्लोक-सरणी-समुल्लोल-पृथुल-कल्लोल-निकर-वेग-समाघात-विशकलित-गगन-विमान-गलित-चक्र-चक्रवाल-तर्कणीयैः, अमल-पुष्कर-बिम्बित-पुष्कर-चर-चक्रपाद-चरणाग्रचक्र-चतुरिम-निष्कासिभिः, कृत्रिम-मणि-पुत्रिका-विवाह-पक्त्रिम-कुतुक-सलिलराज-पुत्रिका-जन-निर्वर्त्तित-नीराजन-वर्धमान-निकर-मध्य-विनिर्धारणीयैः, समुत्कटमहोर्मिघटाधाराटनिषादि-

---

विशेषास्तैः पारिप्लवो यः कल्पपादपस्तस्माद्विभ्रष्टा याः पुष्टकलिकास्तद्विकल्पैस्तत्सदृशैः, निजस्य सागरस्य नदराजपदस्य यत्समुत्तेजनं द्रढनं तस्य कार्मणाय मूलकर्मणे (' मूलकर्म तु कार्मणम् ' इत्यमरः ) यानि चामराणि तेषां सधर्मभिः समानधर्मभाग्भिः, वरुणगृहवितानस्य दुकूलैश्चन्द्रकैरिव भूतैः, वनमालिनो विष्णोः शयनानां शय्यायाः कुण्डलितकुण्डलिरूपाणां कुलैः समूहैरिव, वनमालिनाभिस्थितविधेर्मरालैरिव फेनजालैरलङ्कृतम् ।

**स्वर्लोकेति** । किञ्च कूर्मसमूहैः समुन्मीलितमहोर्मिकः समुद्रोऽभूत्, कीदृशैः कूर्मसमूहैः ? स्वर्लोकसरणी गगनं तत्पर्यन्तं समुल्लोला ये पृथुलकल्लोलास्तेषां निकरस्तस्य वेगस्तेन समाघातस्तस्मादभिघाताद्विशकलितानि यानि गगनविमानानि तेषां गलितानि यानि चक्राणि तेषां चक्रवालं तद्वत्तर्कणीयैः, अमले पुष्करे जले बिम्बितानि पुष्कराणि कमलानि तानि चरन्ति भक्षयन्तीति ते ये चक्रपादाः करिणस्तेषां चरणाग्रचक्रस्य चतुरिमाणं निष्कासयन्तीति तच्छीलास्तैः हस्तिपादायामस्थौल्यगर्वापहारिभिरित्यर्थः । कृत्रिममणिपुत्रिकाणां शालभञ्जिकानां विवाहेन पक्त्रिमं निर्वृत्तं कुतुकं यस्य स चासौ सलिलराजस्तस्य वरुणस्य यः पुत्रिकाजनस्तेन निर्वर्तितं

जल-मानुष-व्रटु-झाट-करपुटाढौकित-वेत्र-घटित-खेटक-पेटक-पाटव-विघाटकैः, वाडव-कूपीटजात-हेति-कोटि-वेधादिव गाढ-तर-रूढ-कालिमभिः, सेतु-विरचनावकाश-मान्द्य-दर्शनाकुण्ठतर-कोप-दशकण्ठ-दमन-वाधूका-विशिख-विखण्डित-सलिल-कुण्डलि-कुल-फणा-मण्डल-फलक-साधर्म्य-फलित-नर्मभिः, कूर्मसमूहैः, समुन्मीलित-चकित-महोर्मिकम्,

अम्बुपान-करम्बितादर-कालाम्बुवाह-विजृम्भित-कम्पमान-शम्पा-विडम्बित-निलिम्पपुरी-नितम्बिनी-पुनरुदयाडम्बरम्,

---

विहितं यन्नीराजनमारार्तिकं तस्य यानि वर्धमानानि शरावाः ( मृत्पात्रविशेषाः )तेषां निकरस्य यत् मध्यं तद्वद्विनिर्धारणीयैः । समुत्कटा या महोर्मिघटास्ता एव घाराटाः मत्तमातङ्गाः (धाराटो मत्तमातङ्ग इति शब्दस्तोममहानिधिः ) तेषु निषादिनो ये जलमानुषव्रटवस्तेषां झाटा संघातास्तेषां करपुटानि तैराढौकितानि उपायनीकृतानि यानि वेत्रघटि-तानि खेटकस्य चर्मफलकस्य पेटकानि तेषां पाटवस्य महिम्नो विघाटकैः, वाडवाख्यो यः कूपीटजातो वन्हिस्तस्य या हेतयः शिखास्तासां कोटेरग्रभाग-स्य वेधादिव गाढतरं रूढः कालिमा येषु तैः, सेतोर्विरचनस्यावकाशेऽवसरे यन्मान्द्यदर्शनं तेनाकुण्ठतरः प्रवृद्धः कोपो यस्य तादृशो यो दशकण्ठदमन-स्तस्य वाधूका विशिखास्तैर्विखण्डिता ये सलिलकुण्डलिनो जलव्यालास्तेषां कुलस्य यत् फणामण्डलफलकं तस्य साधर्म्ये कलितं नर्म सविलासोपहासो यैस्तैस्तादृशैः कूर्मसमूहैः, समुन्मीलिताश्चकिता आश्चर्यप्रदा महोर्मयो यत्र तं समुन्मीलितमहोर्मिकम् ।

**अम्बुपाने**ति । पुनः कीदृशं समुद्रमित्याह—अम्बुपानार्थं करम्बितादरा ये कालाम्बुवाहा कृष्णमेघास्तेषु विजृम्भिताः कम्प-मानाश्च याः शम्पाः शतह्रदा ताभिर्विडम्बिता निलिम्पपुरी-नितम्बिनीनामप्सरसां पुनरुदयस्याडम्बरो विलासो येन तम् । शैवालान्येव

शैवाल-तन्तु-सन्तान-वेल्लिताकार-मकरी-तुरी-प्रचार-विचलित-वीचिकरोत्करान्तेन, वेलानिल-कुविन्देन, रामचन्द्रस्याभिनवमद्भुतं कमपि यशःपटं निर्मातुमिव तिर्यगर्पितदण्डानुकारिणा दशकण्ठादि-रजनीचर-निपातहेतुना सेतुना विराजितम्, निष्पन्दान्तराल-नीर-पूर-मुकुर-बिम्बित-भुवन-कदम्ब-दम्भाद्, अभ्याशगत-चतुर्भुजाभ्यस्त-विश्वम्भरत्व-विद्यामिव विद्योतमानम्,

भूदार-धारणोदार-पुराण-भूदार-विदारण-व्रण-ग्रन्थिल-शरीर-सन्धिभिः, भ्रमन्मन्थान-गिरि-संधारि-माया-कमठ-काया-ष्ठील-नैष्ठुर्य-साक्षिभिः, अमोघ-राघव-हस्त-लाघव-श्लाघा-युगं-

---

तन्तुसन्तानानि तैर्वेल्लिताः वेष्टिता आविष्टा वा या मकर्यस्ता एव तुर्यस्तासां प्रचारे विचलिता वीचय एव करोत्करास्तेषामन्तोऽङ्गुल्यात्मको यस्य तेन तथा सता वेलानिलतन्तुवायेन रामचन्द्रस्याभिनवं कमपि यशःपटं वयितुं तिर्यगर्पितो यो दण्डस्तदनुकारिणा दशकण्ठादिरजनीचरनाशहेतुना सेतुना विराजितम्। निष्पन्दान्तरालो यो नीरपूर स एव मुकुरस्तत्र बिम्बितं यद्भुवन-कदम्बं तस्य दम्भान्मिषात् निकटवर्त्तिचतुर्भुजादभ्यस्ता विश्वम्भरत्वविद्या येन तमिव विद्योतमानम्।

भूदारेति। भूरूपदाराणां धारणे उदारो यः पुराणभूदारः पुराणवराहस्तत्कृतं यद्विदारणं तेन ये व्रणास्तैर्ग्रन्थिलाः शरीरसन्धयो येषां तैः, भ्रमन् यो मन्थानदण्डभूतो गिरिस्तस्य यो मायाकमठः कमठावतारो विष्णुस्तस्य यः कायस्तत्र यदष्ठीलावन्नैष्ठुर्यं तस्य साक्षिभिः प्रत्यक्षदर्शिभिः, अमोघं यद्राघवस्य हस्तलाघवं तस्य श्लाघायां युगन्धरैर्धुरन्धरैः चिरन्तनजल-

---

१ अष्ठीलाख्यो वर्त्तुलः पाषाण उत्तरापथेषु लभ्यते—इति माधवनिदान-टीकाकारः।

धरैः, चिरन्तन-जल-मानुषैः, निरन्तरम्, पाशायुधावरोध-सौध-वातायनैः, नवनव-मणि-मरीचि-वीचि-नमुचिशासन-शरासनोन्मीलन-वल्मीकैः, आकलित-केलि-जलदेवता-चक्र-दोला-चक्रवालैः, अनवरत-विहारि-वारि-मानुष-योषा-नाभिमण्डल-विवर्त्तैः, आवर्त्तैरतिभयङ्करम्,

कराल-मकर-निकर-करवाल-धारिभिः, अखेद-कमठ-खेटक-फेटकैः, उत्कूल-जल-कलकल-द्वेडा-समुद्भटैः, मन्थर-मथन-महापराधादिव विबुधानां पन्थानं निरुन्धानैः, कुम्भ-सम्भव-कोप-संरम्भादिवाम्भःपान-सम्पतदाशा-कुम्भि-कुट्टनमिव वीचि-घट्टनैरुट्टङ्कयन्तम्,

गगनमिव ग्राहविहारकारणम्, किरणमालिनमिवसन्तत-

---

मानुषैर्निरन्तरम्, पाशायुधस्यावरोधोऽन्तःपुरं तस्य सौधं प्रासादस्तस्य वातायनैरिव, नवनवा ये मणिमरीचयस्त एव वीचयस्तैर्युक्तं यन्नमुचिशासनस्येन्द्रस्य शरासनं धनुस्तस्योन्मीलनार्थं वल्मीकैरिव, आकलितकेलयो या जलदेवतास्तासां यत् चक्रं तस्य दोलाचक्रवालैरिव प्रेङ्खोलनसन्दोहैरिव स्थितैः, अनवरतविहारिणीनां वारिमानुषयोषाणां नाभिमण्डस्य विवर्त्तैरिवावर्त्तैरम्भोभ्रमैरतिभयङ्करम्।

करालेति। कराला मकरनिकरा एव करवालास्तेषां धारयितृभिः, अखेदा महाबला ये कमठास्त एव खेटकफेटका आखेटार्थं चर्मफलकानि येषां तैः। उत्कूला कूलमुद्रुजा या जलस्य कलकलक्ष्वेला तया समुद्भटैः, मन्थरं यन्मथनं तस्य महापराधादिव विबुधानां देवानां पन्थानं गगनं निरुन्धानैः कुम्भसम्भवस्य कोपस्तस्य संरम्भो वेगस्तस्मादिव, अम्भःपानार्थं सम्पततां दिग्दन्तिनां कुट्टनमिव वीचिघट्टनैरुट्टङ्कयन्तम्।

---

१ महाशक्तेर्महार्णवस्य शनैर्मन्थनमेव महापराधस्तस्य निर्बलताधानात्।

स्यन्दनदीप्रवाहम्, गिरीशमिव तमालश्यामलोपकण्ठम्, केशवमिव प्रकाशितशङ्खचक्रम्, विश्वावनधुरीणमपि व्याञ्जत-भुवनभङ्गम्, सदरमप्याक्रान्तवाहिनीमुखम्, सुगतानुगत-मपि शैवलासितम्, सन्ततविद्रुममपि जनितसुरद्रुमम्, आल-वालममरतरूणाम्, आपीडोपवनमम्बिकापतेः, आकरमप्सरो-मणीनाम्, अम्बुदानभवनमखिललोकानाम्, केलिगृहं नालीक-नाभस्य, गौष्ठीनं त्रिविष्टपधेनोः, कोशागारं पाशायुधस्य, नवनवमणिनिचयगर्भितसलिलपूरपरिपाटिकापरिविरचितावर्त-मुद्रम्, समुद्रमद्राक्षीत्, अप्राक्षीदपि समीपवर्त्तिनममात्यम्—

---

**गगनमि**ति । गगनमिव—ग्राहस्य ग्रहसमूहस्य ग्राहाणां च विहारकारणमिति यथाक्रमं गगनसमुद्रयोः पक्षे योज्यम् । किरणमालिनमिव-सूर्यपक्षे-सन्ततं स्यन्दने दीप्रा वाहा यस्य तम्, समुद्रपक्षे-सन्ततं स्यन्दो यस्य तादृशो नदीनां प्रवाहो यत्र तम् । गिरीशमिव-शिवपक्षे-कण्ठसमीपदेशः,समुद्रपक्षे स्पष्टम् । केशवमिव-समुद्र-पक्षे-शङ्खचक्रं शङ्खसमुदायः, विष्णुपक्षे-शङ्खचक्राभ्यामुद्भासितम् । विश्वावन-धुरीणमपि-परिहारपक्षे भुवनं जलम्, विरोधपक्षे—स्पष्टम् । सदरमप्याक्रान्त-वाहिनीमुखम्, विरोधपक्षे—दरो भयम्, वाहिन्यः सेनाः, परिहारपक्षे-दराश्छिद्राणि, वाहिन्यो नद्यः । सुगतेति । विरोधपक्षे-सुगतो बुद्धः, शैवैर्लासितं सुशोभितम् । परिहारपक्षे-सुगताः सदाचारास्तैरनुगतमपि शैवलैरसितं कृष्णायमानम् । सन्ततविद्रुममिति, विरोधपक्षे—विगतद्रुमम् परिहारपक्षे-विद्रुमाः प्रवालाः । अम्बिकापतेरापीडस्य भूषणस्य विधोरुपवन-मुत्पत्तिस्थानम् । नालीकं पद्मम् । त्रिविष्टपं स्वर्लोकस्तस्य गौष्ठीनं भूतपूर्वं गोस्थानकम् ( 'गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्' इत्यमरः । ) पाशायुधो वरुणः । परिविरचिता आवर्त्ता एव मुद्रा अङ्गुलीयकानि येन तम् । स्पष्टमन्यत्, एतादृशं समुद्रमद्राक्षीत्, समीपवर्त्तिनममात्यञ्चानुयुयुजे ।

इन्द्रनीतहयमेधतुरङ्गान्वेषिभिः सगरराजकुमारैः ।
निर्मितः क्षितितलावतरार्थं वारिराशिरयमेव पुरा किम् ? ४८

तथैवेति तेन निवेदिते प्रमुदितमानसो निर्वर्तित-विचित्र-महादान-जलसमुद्रान्तरोऽपि सगरपुत्रानेव मुहुः श्लाघमानः, दशकन्धर-दमनासाधारणावदान-सम्बन्ध-कथानुबन्ध-धुरन्धरैः, चिरन्तनामात्यैः साकं महाम्भोराशि-पीताम्बर-परीरम्भ-विजृम्भितादर-विश्वम्भरा-प्रसारित-भुजाकाण्ड-सम्भवनीयम् , स्वर्लोक-सरणि-समुल्लोल-वेतण्ड-मल्लान्तराल-वेदि-समुल्लासिनम् , लोपामुद्रा-रमण-प्रतीकार-कोपमुद्रा-समुद्रेक-निर्निद्र-समुद्रराज-प्रध्वंसिताचक्र-कलाप-सच्छायम् , वेलानिल-पान-विस्तृत-महेन्द्र-शैलाभिध-फणा-फलक-व्यालाधिप-दीर्घतर-भोगाभोग-लीला-पुषम् , लङ्कापुर-पङ्केरुह-निश्शङ्कोन्मूलनाहंकरण-संकुल-रघुकुल-

---

इन्द्रेति । मघवच्चोरिताश्वमेधघोटकान्वेषिभिः सगरराजकुमारैः क्षितितलेऽवतरणाय किमयमेव वारिराशिः पुरा निर्मितः ? अत्र चतुर्थचरणे "वारिनिधिः किमयं नु पुरेति" इति पाठो न साधीयान् । स्वागता वृत्तम् शिष्टं स्पष्टम् ॥ ४८ ॥

तथेति । सेतुं विलोक्य रामेश्वरं ववन्दे इति दूरेणान्वयः। कीदृशं सेतुम् ? महाम्भोराशिशायिविष्णवालिङ्गनाय विश्वम्भरया प्रसारितस्य भुजाकाण्डस्य सदृशम् , स्वर्लोकाय या सरणिस्तस्यै समुल्लोलः स्पृहयालुर्यो वतण्डमल्लो गजेन्द्र ऐरावतस्तत्कृतेऽन्तराले या वेदिरारोहणाय परिष्कृतभूमिस्तद्वत्समुल्लासिनम् , लोपामुद्रारमणोऽगस्त्यस्तस्य प्रतीकारः प्रतिफलदानं तस्मै यः कोपमुद्रायाः समुद्रेकस्तस्मै निर्निद्रो जागरूको यः समुद्रराजस्तेन प्रध्वंसितो विमुक्तबन्धनो योऽच्छः कलापः केशकलापस्तत्समानच्छायम् , वेलानिलस्य पानार्थं विस्तृतं महेन्द्रशैलनामकफणाफलकं येन तादृशो यो व्यालाधिपस्तस्य दीर्घतरो यो भोगो वपुस्तस्य य आभोग आयामस्तस्य या लीला तां पुष्णातीति

तिलक-भुज-शौण्डीर्य-वेतण्ड-शुण्डादण्ड-समुद्दण्डम् , उद्दाम-पूर्व-
सुपर्वाखर्व-गर्व-निर्मथन-कर्म-निर्वाहक-वैशाख-धूर्निर्वाहकम् ,
ककुत्स्थ-वंश-प्रशस्ति-केतुम् , कौणप-लोक-प्रलय-धूमकेतुम् ,
जानकी-शोक-शल्योद्धरण-हेतुं सेतुं विलोक्य सर्गस्थिति-संहरण-
व्यक्त-गुण-त्रयमपि निर्गुण इति समुद्घोषयन्तम्, पोषित-पितामह-
शिरश्छेदकार्मणमपि ब्रह्म-हननादि-दोष-निर्मथनम्, सकल-निगमा-
गम-गोचरमपि सागरतीरगोचरं रामेश्वरमीश्वरनन्दनो ववन्दे ।

नानाग्रहारैर्नवरत्नहारैः सुवर्णपुष्पैरपि सूक्तिपुष्पैः ।
अभ्यर्च्य रामेश्वरमादरेण तत्सन्निधौ दानशतान्यतानीत् ४६

ततो बहुविध-वसु-वर्ष-तोषित-वसुमती-दिविषदाशीर्-

---

तम् । लङ्कापुरमेव पङ्केरुहं तस्य निःशङ्कोन्मूलनेन यदहङ्करणं तेन संकुले
यो रघुकुलतिलकस्तस्य भुजशौण्डीर्यमेव वेतण्डस्तस्य शुण्डादण्डाभम् , उद्दा-
मानो ये पूर्वसुपर्वाणः पूर्वदेवा दैत्या इति यावत्तेषामखर्वस्य गर्वस्य निर्मथन-
कार्मणो निर्वाहको यो वैशाखः सहायभूतो दण्डस्तस्य धूर्भरस्तस्य निर्वाहकं
निर्वोढारम् । ककुत्स्थेत्यादिहेतुमित्यन्तं सुस्पष्टम् । कौणपा राक्षसाः ।
धूमकेतुरीतिः ।

सर्गस्थितिसंहरणैर्व्यक्तगुणत्रयमपि निर्गुण इति समुद्घोषयन्तम् ।
पोषितं पितामहस्य ब्रह्मणशिरश्छेदकार्मणं येन तादृशमपि ब्रह्महननादिदोष-
निर्मथनम्, रामस्य दाशरथेरीश्वरं तन्नामकं ज्योतिर्लिङ्गमीश्वरनन्दनः
ईश्वरदेवात्मजो नृसिंहदेवः, ववन्दे । स्पष्टमन्यत् । ब्रह्मशिरश्छेदकथा दक्षयज्ञ-
सम्बन्धिन्यत्रानुसन्धेया ।

**नानेति** । नानाग्रहारैर्नानाग्रामैर्नवीनैरत्नैर्हारैश्च सुवर्णपुष्पिकाभिः सूक्ति-
वचनप्रपञ्चैश्च सादरं रामेश्वरमभ्यर्च्य तत्सन्निधौ नरसिंहदेवो दानशतान्य-
तानीत् कृतवान् । इन्द्रवज्रा वृत्तम् ॥४६॥

**तत इति** । ततो बहुविधेन वसुनो द्रविणस्य वर्षेण तोषिता ये वसुमती-

विशेष-परितोषितो निर्गत्य, प्रेषित-निज-प्रेष्य-जनाकृष्यमाण-तत्तद्देश-धरणीश-किरीट-शृङ्गाट-कोटि-विनिवेशित-पदक्रमः, क्रमेणापरान्त-नदीकान्त-वेला-पर्यन्त-दिशा-चक्र-समाक्रमणेऽपि समुन्नततरात्युग्र-शौर्य-सूर्योदयः, सागरान्तरावास-दुर्लङ्घ्यां लङ्कामिव रघुपुङ्गवः कावेरीपरिवेष्टितां श्रीरङ्गपट्टणाभिधामावरिष्ट पुरीम् ।

स्थिरे जले सेतुरकारि पूर्वं तदद्भुतं नेति कवेरजायाः ।
सेतुं प्रवाहेषु गुणाभिरामश्चित्ते सतामद्भुतमप्यबध्नात् ॥ ५० ॥

सेतु-मार्ग-सरभस-वल्गितेन, मुद्गर-यन्त्र-चक्र-पृषत्क-खड्ग-मुख-डिम्भ-विविधायुध-वर्ग-निरर्गलेन, अतर्कित-सम-विषम-कर्कश-मृदुक्रमेण, निजचक्रेण, तं मण्डलाधिपं पुण्डरीकवाहा

---

दिविषदो भूमिदेवास्तेषामाशीर्विशेषैः परितोषितो निर्गत्य प्रेषितनिजप्रेष्यजनैर्भुजिष्यजनैराकृष्यमाणनृपकिरीटकोटिषु मुकुटाग्रेषु निवेशितपदक्रमः, क्रमेणापरान्तनदीकान्तस्य पश्चिमसागरस्य वेलापर्यन्तं दिशाचक्रस्य समाक्रमणेऽपि समुन्नततरात्युग्रशौर्यसूर्योदयः, सागरान्तरे आवासेन दुर्लङ्घ्यां लङ्कां रघुकुलपुङ्गवो राम इव कावेरीपरिवारितां श्रीरङ्गपत्तनाभिधां पुरीमावरिष्ट पर्यवारयत् ।

**स्थिर** इति । पूर्वं समुद्रस्य स्थिरे जले सेतुरकारि तत्कर्माद्भुतमाश्चर्यकरं भवतीति हेतोः गुणाभिरामः स नरसिंहदेवः कवेरजायाः प्रवाहेषु सेतुं सतां चित्ते चाद्भुतमबध्नात् क्रमेण निर्ममे स्थिरीचक्रे चेत्यर्थः । उपजातिवृत्तम् ॥ ५० ॥

**सेत्विति** । सेतुमार्गे सरभसं वल्गितं परिचलनं तेन, मुद्गरयन्त्रचक्रपृषत्कादिविविधायुधवर्गैः कृत्वा निरर्गलेनातर्कितः समो विषमः कर्कशो मृदुश्च परिक्रमो येन तेन तादृशेन, निजचक्रेण तं मण्डलाधिपं पुण्डरीकः सिंहो वाहो

तिलक-भुज-शौण्डीर्य-वेतण्ड-शुण्डादण्ड-समुद्दण्डम्, उद्दाम-पूर्व-
सुपर्वाखर्व-गर्व-निर्मथन-कर्म-निर्वाहक-वैशाख-धूर्निर्वाहकम्,
ककुत्स्थ-वंश-प्रशस्ति-केतुम्, कौणप-लोक-प्रलय-धूमकेतुम्,
जानकी-शोक-शल्योद्धरण-हेतुं सेतुं विलोक्य सर्गस्थिति-संहरण-
व्यक्त-गुण-त्रयमपि निर्गुण इति समुद्धोषयन्तम्, पोषित-पितामह-
शिरश्छेदकार्मणमपि ब्रह्म-हननादि-दोष-निर्मथनम्, सकल-निगमा-
गम-गोचरमपि सागरतीरगोचरं रामेश्वरमीश्वरनन्दनो ववन्दे।

नानाग्रहारैर्नवरत्नहारैः सुवर्णपुष्पैरपि सूक्तिपुष्पैः।
अभ्यर्च्य रामेश्वरमादरेण तत्सन्निधौ दानशतान्यतानीत् ४९

ततो बहुविध-वसु-वर्ष-तोषित-वसुमती-दिविषदाशीर्-

---

तम्। लङ्कापुरमेव पङ्केरुहं तस्य निःशङ्कोन्मूलनेन यदहङ्करणं तेन संकुले
यो रघुकुलतिलकस्तस्य भुजशौण्डीर्यमेव वेतण्डस्तस्य शुण्डादण्डाभम्, उद्दा-
मानो ये पूर्वसुपर्वाणः पूर्वदेवा दैत्या इति यावत्तेषामखर्वस्य गर्वस्य निर्मथन-
कार्मणो निर्वाहको यो वैशाखः सहायभूतो दण्डस्तस्य धूर्भरस्तस्य निर्वाहकं
निर्वोढारम्। ककुत्स्थेत्यादिहेतुमित्यन्तं सुस्पष्टम्। कौणपा राक्षसाः।
धूमकेतुरीतिः।

सर्गस्थितिसंहरणैर्व्यक्तगुणत्रयमपि निर्गुण इति समुद्धोषयन्तम्।
पोषितं पितामहस्य ब्रह्मणशिरश्छेदकार्मणं येन तादृशमपि ब्रह्महननादिदोष-
निर्मथनम्, रामस्य दाशरथेरीश्वरं तन्नामकं ज्योतिर्लिङ्गमीश्वरनन्दनः
ईश्वरदेवात्मजो नृसिंहदेवः, ववन्दे। स्पष्टमन्यत्। ब्रह्मशिरश्छेदकथा दक्षयज्ञ-
सम्बन्धिन्यत्रानुसन्धेया।

**नानेति**। नानाग्रहारैर्नानाग्रामैर्नवीनैरत्नैर्हारैश्च सुवर्णपुष्पिकाभिः सूक्ति-
वचनप्रपञ्चैश्च सादरं रामेश्वरमभ्यर्च्य तत्सन्निधौ नरसिंहदेवो दानशतान्य-
तानीत् कृतवान्। इन्द्रवज्रा वृत्तम्॥४९॥

**तत इति**। ततो बहुविधेन वसुनो द्रविणस्य वर्षेण तोषिता ये वसुमती-

पुरि स्थापयित्वा तदात्व एव ततो दुर्मन्नरादि (?) महादुर्ग-जालं सलीलमग्रहीत् ।

दुर्गं प्रगृह्य मतरंग्यभिधं विपक्षात्
स्वर्गं विरोचनसुतादिव शार्ङ्गपाणिः ।
गोकर्णनाथमनमत् सुतदाररोध-
क्रोधादिवापरपयोनिधिना परीतम् ॥ ५१ ॥

तेने तुलापूरुषदानपूर्वं तेनेह नानाविधदानजातम् ।
संख्ये भवन् यद्यपि सूक्ष्मलक्षः स स्थूललक्षो हि विहापितेषु ५२

ततो विनिर्गत्य सत्वरमुत्तरां हरितमभिप्रस्थितवति मण्ड-लीकसूर्ये तदीयधामोष्माणमसहमानः शुक्रमुखानेकमहीनाय-कानुगम्यमानः, काम्बोज-वाह्लीक-मुख्य-तुखार-कुखान-तुरग-रिखास-शत-सम्पुटित-तलोऽपि सुरत्राणः प्राणत्राणपरायणो दुर्गमं मानवदुर्गं तत्क्षणमध्यरुक्षत् ।

---

पुरि पुनः स्थापयित्वा तदात्व एव ततस्तस्मान्महावीरात् दुर्मन्नरादिनामकं दुर्गाणां जालं सलीलमग्रहीत् ।

**दुर्गमिति**। मतरङ्गीत्यभिधा यस्य तं दुर्गं प्रगृह्य विरोचनसुताद् बलेः सकाशात् स्वर्लोकं शार्ङ्गपाणिरिव ( प्रगृह्य ) सुतस्य ( चन्द्रस्य ) दाराणां ( गङ्गायाः ) रोधेनावरोधेन यः क्रोधस्तस्मात्कारणात् इव पयोनिधिना परीतमावेष्टितं गोकर्णनाथमेतन्नामकं भगवतश्चराचरगुरोर्भवस्य मन्दिरमनमत् प्राणंसीदि-त्यर्थः । वसन्ततिलकं छन्दः ॥५१॥

**तेन** इति । तेन नृसिंहदेवभूभुजा तुलापूरुषदानपूर्वं नानाविधदानजातं तेने । किञ्च यद्यपि संख्ये संपराये स सूक्ष्मलक्षोऽभूत् तथापि स विहापितेषु दानेषु स्थूललक्षः विपुलधनदाताऽभूदित्यर्थः । इन्द्रवज्रा वृत्तम् ॥ ५२ ॥

**तत** इति । तत इत्यारभ्याध्यरुक्षदित्यन्तं सर्वं निगदनीतार्थम्,

त्रासाद् द्रुतं मानवदुर्गमध्ये
धृत्वा सुरत्राणवराहपादम् ।
अमुञ्चतानुग्रहधीस्स धीरो
गृहीतमब्धिं किल कुम्भजन्मा ॥ ५३ ॥

प्रदक्षिणीकृत्य परिभ्रमन्निति
क्षितिं तदा केवलमेव नाजयत् ।
भुजावदानस्फुरितैर्गुणोत्करैः
अपि त्रिलोकीमवनीपुरन्दरः ॥ ५४ ॥

विक्रमाद्विमतक्ष्मापान् व्यापाद्य श्वापदानिव ।
विद्यापुरीदरीं प्रीत्या विवेश नृपकेसरी ॥ ५५ ॥

तुङ्गतर तुङ्गभद्रा-तरङ्ग-पर्यङ्क-प्रेङ्खोलित-पङ्केरुह-सौरभा-

---

विशेषस्तु मण्डलीकेषु माण्डलिकनृपेषु सूर्यभूते । धाम-प्रतापः । सम्पुटित-मध्युषितं तलं प्रासादाधस्तलं, यस्य सः सुरत्राणः=सुलतानेतिप्रसिद्धः । मानवसंज्ञको दुर्गः इति ।

**त्रासादि**ति । मानवदुर्गमध्ये त्रासाद्धेतोः द्रुतं प्रयातं वराहपादाख्यं सुरत्राण-मनुग्रहधीः स धीरोऽमुञ्चत । कः कमिव ? कुम्भजन्माऽगस्त्यो गृहीतं पीतमब्धिं सागरमिव । उपजातिवृत्तम् ॥५३॥

**प्रदक्षिणीकृत्ये**ति । अवनीपुरन्दरः स इतीत्थं प्रदक्षिणीकृत्य परिभ्रमन् तदा केवलं क्षितिमेव नाजयत् किन्तु भुजावदानस्फुरितैः गुणोत्करैस्त्रिलोकी-मप्यजयत् । वंशस्थं वृत्तम् ॥ ५४ ॥

**विक्रमादि**ति । विक्रमात् स्वपराक्रमाद् विमनता ये क्ष्मापा राजान-स्तान् श्वापदानिव व्यापाद्य विद्यापुर्येव दरी तां नृपकेसरी विवेश । अनुष्टु-ब्वृत्तम् ॥ ५५ ॥

**तुङ्गतरे**ति । तुङ्गतरा ये तुङ्गभद्राया एतन्नामिकायाः सरितस्तरङ्गास्त एव पर्यङ्कास्तेषु प्रेङ्खोलिता आन्दोलिता ये पङ्केरुहास्तेषां सौरभानुबन्धी यो

नुबन्धि-गन्धवह-स्तनन्धयाचान्त-परिश्रमः, विश्वम्भरा-भरः, विष्वगभिवृष्यमाण-हिम-जल-प्रवाहेण कल्पित-मङ्गलाप्लावनाम्, समुत्तुङ्ग-सौध-शृङ्ग-सङ्घट्टित-शशाङ्क-बिम्ब-विगलदमृत-पूर-शङ्कनीय-बहलसुधा-पङ्क-लेप-शृङ्गारित-नैकविध-प्राकार-वलय-निर्वर्त्तित-पत्रोर्ण-परिधान-संविधानाम्, उपवन-पवमान-कुमार-समानीयमान-प्रसून-मञ्जरी-पराग-खञ्जालिका-संछादित-पटवास-चूर्ण-समालम्भनमिव सम्भावयन्तीम्,

विसृत्वर-दीप्ति-विसर-मरुत्वदुपल-प्रासाद-संदानित-केतु-वैजयन्तीकतया करपल्लवेनानुकलमलक-समीकरणमिव कलयन्तीम्, समुन्नत-सौध-वातायन-समुद्गच्छदच्छवास-धूप-च्छटा-

---

गन्धवहस्तनन्धयो मन्दवायुस्तेन आचान्तोऽपनीतः परिश्रमो यस्य स तादृशः, विश्वम्भरां बिभर्तीति विश्वम्भराभरः । विष्वगभिवृष्यमाणं परितः सिच्यमानं यद्धिमजलं शिशिरसलिलं तस्य प्रवाहेण कल्पितं मङ्गलेषु मङ्गलजलेष्वाप्लावनं यया ताम्, समुत्तुङ्गसौधशृङ्गैः सघट्टितो यः शशाङ्कबिम्बस्तस्माद्विगलन्योऽमृतपूरस्तद्वच्छङ्कनीयस्तत्सदृशो यो बहलः सुधापङ्कलेपस्तेन शृङ्गारितो यो नैकविधो बहुविधः प्राकारवलयस्तेन निर्वर्तितं सम्पादितं पत्रोर्णपरिधानं चीनांशुकशाट्याः परिधानं यया ताम्, प्राकारवलयं परिहितशाटीकल्पमभूदित्यर्थः। उपवनस्य यः पवमानकुमारो मन्दं वहन्वायुस्तेन समानीयमानो यः प्रसूनमञ्जरीपरागस्तस्य खञ्जालिका परम्परा तया संछादितं मिश्रितं यत्पटवासचूर्णं तस्य समालम्भनमिव सम्भावयन्तीम् ।

**विसृत्वरे**ति । विसृत्वरदीप्तिविसरा ये मरुत्वदुपला इन्द्रनीलमणयस्तैर्निर्मितो यः प्रासादस्तदुपरि संदानिता या केतुवैजयन्ती ध्वजदण्डपताका तद्वत्त्वेन करपल्लवेन पल्लवसदृशेन करेणानुकलमनुक्षणमलकसमीकरणमिवाकलयन्तीमयत्वे यथा बाष्पयानस्थितिस्थानेषु ( station ) रमण्यो भूयस्तरां विदधत्योऽवलोकयन्ते, समुन्नतसौधस्य वातायनानि तेभ्यः समुद्गच्छन्

छद्मना प्रत्युत्थान-समुद्यममिव विद्योतयन्तीं, विद्यापुरीं प्रतिपद्य सरस-विलोकन-चन्द्रिकाभिरनुगृह्णानो यथोचितोपचार-सम्भावितानुयात्रिक-पार्थिव-वर्गो निरर्गल-हृदयोल्लासः प्राविशदुदवसितम् ।

नित्यप्रत्यग्रपूजानिरतनिजपुरीनिर्गमाशान् महीशान्
भूयः स्वस्थानदानप्रमुदितमनसस्सानुकम्पं प्रहित्य ।
आसेतोराहिमाद्रेरविहतसुमहाशासनः श्रीनृसिंहः
पारावारैः परीतां भवनमिव निजं पालयामास धात्रीम् ५६

निष्कण्टकीकृत्य नृपो धरित्रीममात्यवर्येष्वधिरोप्य राज्यम् ।
साहित्यसङ्गीतमुखैः प्रसङ्गैर्निनाय कालं नियतप्रसन्नः ॥५७॥

कुलेन शीलेन गुणेन धन्या कन्या मया कापि विलोकितेति ।
कथाप्रसङ्गेन कदाचिदूचे पुरोहितः पूर्णमनोरथस्य ॥ ५८ ॥

---

योऽच्छवासः सुगन्धिर्धूपस्तस्य या च्छटा तस्याश्छद्मना प्रत्युत्थानस्य समुद्यममिव विद्योतयन्तीम्, एतादृशीं विद्यापुरीं प्रतिपद्य प्राप्य सरसविलोकनचन्द्रिकाभिस्तामनुगृह्णानो यथोचिताचारसंभावितानुयात्रिकपार्थिववर्गो निरर्गलहृदयोल्लासः स नरसिंहदेव उदवसितं गेहं प्राविशत् ।

नित्येति । श्रीनृसिंहो नित्यं प्रत्यग्रा नवनवा याः पूजास्तासु निरता या निजपुर्यस्ताभ्यो निर्गमे प्रस्थाने आशा प्रत्यावर्त्तनाशा येषां तान्, किञ्च भूयः सानुकम्पं स्वस्थानदानेन प्रमुदितमनसः महीशान् प्रहित्यासेतोराहिमाद्रेरविहतमप्रतिहतं सुमहच्च शासनं यस्य तादृशः स नरसिंहदेवः पारावारैः परीतां धात्रीं महीं निजं भवनमिवानायासं पालयामास । स्रग्धरा वृत्तम् ॥ ५६ ॥

निष्कण्टकीकृत्येति । नृपो धरित्रीं निष्कण्टकीकृत्य नियमेन प्रसन्नो हर्षप्रकर्षवान् सन् कालं निनाय । व्याख्यानपेक्षमन्यत् । उपजातिवृत्तम् ॥५७॥

कुलेनेति । पूर्णमनोरथस्य तस्य पुरोहितः कदाचिद् मया कापि कन्या

तदीय-वचन-निशमनमात्र-समुद्रिक्त-कौतूहलः, 'कियद्वा वयः ? कीदृशं रूपम् ?, किमभिधानम् ?, किमीयमपत्यम् ? कीदृशो वंशः ? के पुनरस्या बन्धवः ? कुत्र वा वर्त्तते ? सर्वमवगत्य सत्वरमागच्छे'ति पुरोहितं प्राहिणोत्, प्रहितः स एष तस्या बान्धवमुखाद् वृत्तान्तमखिलमवगम्य राज्ञे विज्ञाप्य तदनुमत्या साकममात्यगणेन दिवसकर-कुलोत्तंस-राचि-राज-रत्नाकर-रेखाम्, श्रीरामाम्बिका-गर्भ-शुक्ति-मुक्ता-मणिम्, अन्यूनतरान्वयोचित-शील-लावण्यादि-गुण-गण-धन्याम्, कन्याम्, ओम्बमाम्बाभिधानाम्, आनीय यथाविधि धरणिभुजा पर्यणीनयत् ।

शङ्करीमिव शशाङ्ककिरीटस्तामुदूह्य धरणीपरिणेता ।
स्वर्विभोरपि मुहुः स्पृहणीयान् निर्विवेश निखिलानिह भोगान् ५९
कुलप्रदीपं गुणिनं कदा वा सुतं समासाद्य सुखी भवेयम् ।
इत्यच्युतं प्रार्थयमान एव कालाननैषीत्कतिचित् क्षितीशः ॥६०॥

कदाचन स्वप्न-समागत-रमा-सख-वितीर्ण-कुमारवर-वर-

---

दृष्टेत्यूचेऽवोचत्। स्पष्टमन्यत् ।उपेन्द्रवज्रा वृत्तम् ॥ ५८ ॥

**तदीयेति** । शिष्टं स्पष्टमेव । विशेषस्तु-राचिराजनामको राजरत्नाकरस्तस्य रेखां रत्नपङ्क्तिरूपम्, रामाम्बिकाप्रसूतिम् इति ।

**शङ्करीमिति** । शशाङ्कशेखरः शङ्करीमम्बिकामिव तामोम्बमाम्बां धरणीपरिणेता उदूह्य विवाह्य स्वर्विभोः सुरेन्द्रस्यापि मुहुः स्पृहणीयान् निखिलान् भोगान् निर्विवेश बुभुजे, स्पष्टमन्यत् । स्वागता वृत्तम् ॥ ५९ ॥

**कदाचनेति** । कदाचन वैजननमासः प्रादुरासीदित्यन्वयः । स्वप्ने समागतः संगतो यो रमासखो विष्णुस्तेन वितीर्णं यत् कुमारश्रेष्ठरूपवर-

प्रदान-वचन-प्रसङ्गेन सह परिस्फुटावलग्नायाः, सपत्नी-वक्त्र-शतपत्रैः सह मेचकीभवदुरोज-चूचुकायाः, पार्थिव-वीचिकया सहोपचीयमानाखिल-प्रतीकायाः, वयस्या-जन-मनः-प्रसादेन सहातिविमल-तर-कपोल-पालिकायाः, अवचन-प्रकाशित-निर्भर-गर्भ-भरायाः, नृपालानीत-समस्त-वस्तुजात-निस्तीर्ण-दोहद-खेदायास्तस्या देव्याः, प्रकटिताखिल-जन-प्रमोद-प्रयोजनो वैजननमासः प्रादुरासीत्। अथ तदानीमवनीपतिरानीय समस्त-कार्त्तान्तिक-वर्गमेकाग्रतया पुत्रोदयसमयं प्रत्यपालयत्।

दुग्धाम्बुराशिलहरीव तुषारभानु-
मर्थं नवीनमनघा सुकवेरिवोक्तिः।
प्रत्यङ्मुखस्य यमिनः प्रतिभेव बोधम्
प्रासूत भाग्यमहितं सुतमोम्बमाम्बा ॥ ६१ ॥

नटदखिलजनं नदन्मृदङ्गम्,
स्फुरदितरेतरपूर्णपात्रदानम्।

---

प्रदानस्य वचनं तस्य प्रसङ्गेन सह परिस्फुटोऽवलग्नो मध्यभागो यस्यास्तस्याः। सहोक्त्यलकारः। प्रतीकाः=अङ्गानि। अवचनमेव प्रकाशितो निर्भरः पूर्णतरो गर्भभरो यस्यास्तस्याः। दोहदो गर्भसमयाभिलाषः प्रकटिताखिलप्रमोदप्रयोजनो वैजननमासः प्रसूतिमासः प्रादुरासीत्। कार्तान्तिकाः दैवज्ञाः।

**दुग्धेति**। दुग्धाम्बुराशिलहरी तुषारभानुं चन्द्रमिव, अनघा सुकवेरुक्तिर्नवीनमर्थमिव, प्रत्यङ्मुखस्य विषयपराङ्मुखस्य यमिनः प्रतिभाबोधमिव भाग्यैर्महितं पूजितं सौभाग्यशालिनमिति यावत् सुतमोम्बमाम्बा प्रासूताजीजनदिति। वसन्ततिलकं वृत्तम्॥ ६१॥

**नटदिति**। तस्य जननेन सर्वं जगत् नगरमिव राज्ञो राजधानीव नभोरुभोगं नभसंचारिदेववदुरुभोगो यत्र तत्, नभशब्दोऽदन्तोऽपि सर्वे सान्ता

नगरमिव विभोर्नभोरुभोगं
जगदभवज्जननेन तस्य सर्वम् ॥ ६२ ॥

उल्लासैः सममधुरुत्सवाः प्रसिद्धिं
प्रासीदन् सह महतां मनोभिराशाः ।
आशीर्भिस्सममुदगुर्मृदङ्गनादाः
काराभिस्सममगलन् कलिप्रकाराः ॥ ६३ ॥

मन्दानिलाहतमहीरुहपुष्पजालैः
मह्यामिवाकृषत मङ्गलरङ्गवल्लीः ।
वल्गत्प्रदक्षिणशिखावलयैर्हुताशा
नीराजनामनुगृहं नियतं व्यतन्वन् ॥ ६४ ॥

अथ तदानीं कुमार-जन्म-सम्मद-निवेदनाय सरभसमभि-

---

अदन्ता इति सिद्धान्तात् केषाञ्चिन्मते । नटदखिलं जनम्, नदन्मृदङ्गम्, स्फुरदितरेतरं पूर्णपात्रदानं बलादभिलषितवस्तुग्रहणं यत्र तत्तादृशमभवत् । पुष्पिताग्रापरपर्यायमौपच्छन्दसिकं छन्दः ॥ ६२ ॥

**उल्लासैरिति** । उल्लासैः सममुत्सवाः प्रसिद्धिमधुरधारयन्, महतां मनोभिः सहाशा दिशाः प्रासीदन्, महतामाशीर्भिः सह मृदङ्गनादा उदगुर्निर्ययुः, काराभिः कारागृहनिबद्धलोकनिगडैः सह कलिप्रकाराः कलिभेदाः सर्वेऽपि क्लेशा इत्यर्थः । समगलन्नेशुः । प्रहर्षिणी छन्दः ॥ ६३ ॥

**मन्दानिला** इति । मन्दानिलाहतानां मन्दवायुभिरीषत्प्रचालितानां महीरुहाणां पुष्पजालैः करणभूतैर्मह्यां मङ्गलरङ्गवल्लीः कर्मभूता अकृषत व्यधीयन्त । स्त्रियो यथा पुत्रोत्पत्तौ कुड्येषु विलिखन्ति सर्वतोभद्रादिकं तद्वदित्यर्थः । वल्गन्त्यो या प्रदक्षिणशिखास्तासां वलयैर्हुताशा अनुगृहं नीराजनामारार्तिकं व्यतन्वन् चक्रुः । पुत्रोत्पत्तौ देवाः प्रासदन्नित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ६४ ॥

**अथेति** । अथ तदानीं कुमारजन्मसम्मदनिवेदनाय सरभसं सवेगमभिपतन्तीना-

पतन्तीनाम्, अनुपद-विलम्बितमहंपूर्विकया युगपदेव 'कुमारः कुमार' इत्युद्घोषयन्तीनाम्, अन्तःपुरःपुरन्ध्रीणाम्, अनुलापेन, पर्व-शर्वरी-परिवृढ-मरीचि-परम्परा-सुधा-पूरेण, कलशाकूपार इव प्रतिक्षणमन्तर्हृदयमपरिमितानन्दभरोपचीयमान-वपुरवनीपतिः,

अपर-जनानौपयिकमपि अङ्गस्पृष्टमाभरण-कलापमभिमतापरिमेय-स्वापतेय-जातेन समं वितीर्य तासामासादित-प्रसादः, सन्निहित-समाहित-पुरोहित-ससंभ्रमाहूत-मौहूर्त्तिक-वर्ग-निर्णीत-नैसर्गिक-चक्रवर्ति-पदार्पण-लग्नक-शुभ-ग्रह-चक्र-चार-समुचित-लग्न-बल-श्रवण-द्विगुणीकृतोत्साह-बहुप्रकार-प्रवर्त्तित-महोत्सवः, तत्समय-समेत-नानादेशागत-महीसुर-व्रात-सात्कृत-समस्त-वस्तु-जातः,

---

मनुपदं विलम्बितमनुपदविलम्बितमिति हेतोरहं पूर्वमिति धिया च युगपदेव " कुमारः, कुमारः " इत्युद्घोषयन्तीनाम्, अन्तःपुरपुरन्ध्रीणाम् अनुलापेन मुहुर्भाषणेन पूर्णचन्द्रमरीचिभिः पारावार इवापरिमितानन्दभरोपचीयमान-वपुरवनीपतिः ।

अपरेति। अपरजनानौपयिकमपरमनुष्यालभ्यम् ('युक्तमौपयिकं लभ्य' मित्यमरः ) आभरणकलापं बहुतरयथेष्टधनजातेन समं ताभ्यः परिचारिकाभ्यः वितीर्य तासामासादितप्रसादः, सन्निहितः समाहितः सन्तुष्टश्च यः पुरोहितस्तेन ससंभ्रमाहूतमौहूर्तिकवर्गनिर्णीतं यत् नैसर्गिकं चक्रवर्तिपदस्यार्पणं तत्र लग्नका प्रतिभुवो ( Bail givers ) ये शुभग्रहास्तेषां चक्रं तस्य चारः सञ्चारस्तेन समुचितं युक्ततमं यल्लग्नबलं तस्य श्रवणेन द्विगुणीकृत उत्साहो यस्य स चासौ बहुप्रकारं प्रवर्तितो महोत्सवो येन स चासौ

पुरोहितेन सममभ्यन्तरं प्रविश्य सूतिका-गृह-सविधमुपागतायाः पुरोहित-वनितायाः विशङ्कटाङ्कपर्यङ्कालङ्करणं पूर्वसर्व-सद्दाधरशिखरवर्त्तिनं भानुमन्तमिव परिस्फुरन्तं बालकमालोक्य त्रैलोक्यमपि करतलान्तर्गतमेव तर्कितवान् ।

पूर्णचन्द्रपुनरुक्तमाननं नन्दनस्य नरपालकेसरी ।
विस्मयस्तिमितवीक्षणश्चिरं पश्यति स्म फलिताखिलाशयः ६५

विनयनयविवेकविक्रमादिष्वखिलगुणेष्वमुमच्युतं विदित्वा ।
अभिजनकृतसम्मतिर्व्यतानीदवनिपतिस्सुतमच्युताभिधानम् ६६

कुलोचितं कर्म कुमारकस्य व्यतानि सर्वं विधिवन्नृपेण ।
आसीदनेनायममेयतेजाः सदाशयस्सद्गुरुदीक्षयेव ॥ ६७ ॥

---

नरसिंहदेवः । समेताः संगताः महीसुरव्रातसात्कृताः ब्राह्मणवर्गायत्तीकृताः, प्रत्यर्पिता इति यावत् ।

**पुरोहितेने**ति । पुरोहितेन सममभ्यन्तरं प्रविश्य सूतिकागृहसविधमुपागतायाः पुरोहितवनितायाः विशङ्कटाङ्को विशालोत्सङ्ग एव पर्यङ्कस्तस्यालङ्करणं पूर्वगिरिशिखरस्थितमिव भानुमन्तं तं बालमालोक्य त्रैलोक्यमपि विजितं करतलगतं चामँस्त ।

**पूर्णचन्द्रे**ति । पूर्णचन्द्रः पुनरुक्तं पुनरुक्तिरूपं नन्दनस्याननं नरपालकेसरीविस्मयस्तिमितवीक्षणः सन् फलिताखिलमनोरथश्चिरं पश्यति स्म । रथोद्धता वृत्तम् ॥ ६५ ॥

**विनये**ति । स्पष्टम्—अच्युतं च्यवनरहितं विदित्वा यथार्थनामानममुं चक्रे इति विशेषः । औपच्छन्दसिकं छन्दः ॥ ६६ ॥

**कुलोचितमि**ति । कुमारकस्य कुलोचितं सर्वं कर्म नृपेण विधिवद् व्यतानि विहितम्, अनेन सद्गुरुदीक्षया सदाशयः सन्मनीषो बटुरिवायमतितेजा आसीदिति । उपजातिवृत्तम् ॥ ६७ ॥

धीरस्य धीरस्य गुरूपदिष्टा विद्यास्समस्तास्सकलाः कलाश्च ।
अधारयद्यत्नमपास्य सद्यः सूचीरयस्कान्तशलाकिकेव ॥ ६८ ॥
उद्यन्तं प्रथमावनीधरतटादोजांसि भानुं यथा
प्रत्यग्रा गुरुसन्निधौ तमभजन् प्राग्वासनाभिः कलाः ।
आमोदं हृदयेषु सर्वजगतामातन्वते साम्प्रतं
ता एताः परिहृत्य मोहमखिलं तानीव गाढं तमः ॥ ६९ ॥

अनन्तरमनन्य-सामान्य-सौजन्येन, अन्यूनाधीत-विविधा-युध-नैपुण्येन, कारुण्य-दाक्षिण्यादि-गुण-शरण्येन, पुण्यतर-सरण्यधीन-मति-विन्यासेन, निपुण-गण्य-प्राज्य-साम्राज्य-रमा-समागम-पैशुन्य-मुखर-कल्याण-सर्व-लक्षणानुगुण्य-वर्णनीयेन, कलशार्णोराशि-कन्यका-रमण-चरण-स्मरण-निशित-नियत-शुभाचारेण

---

धीरस्येति । अस्य धीरस्य धीर्गुरूपदिष्टाः समस्ताः विद्याः सकलाः कलाश्च यत्नमपास्य सद्योऽधारयद्यथाऽयस्कान्तशलाकिका सूचीर्धारयति तद्वदिति । उपजातिच्छन्दः ॥६८॥

उद्यन्तमिति । प्रथमः प्राच्यो योऽवनीधरो भूधरस्तस्य तटाद्यथौजांसि भानुं भजन्ति तथा प्राग्वासनाभिः कारणैः प्रत्यग्रा नवीनाः कलास्तं गुरुसन्निधौ गुरुसन्निधानमात्रेणाभजन् । साम्प्रतमेतास्ताः सर्वजगतां हृदयेषु मोहमज्ञानं परिहृत्य तानि सूर्यौजांसि गाढं तम इव आमोदं तन्वते । शार्दूलविक्रीडितं छन्दः ।

अनन्तरमिति । अनन्तरमनन्यसामान्यसौजन्येन, अन्यूनं यथा स्यात्तथाधीता ये विविधायुधास्तेषु नैपुण्येन, कारुण्यदाक्षिण्यादिगुणशरण्येन, पुण्यतरसरण्योरधीनो मतिविन्यासो यस्य तेन, पुण्यावहमार्गसंचारशीलधिये-त्यर्थः । निपुणैर्गण्यं यत् प्राज्यस्य साम्राज्यस्य या रमा लक्ष्मीस्तस्य समागमस्य पैशुन्यं सूचनं तत्र मुखराणि वावदूकानि यानि कल्याणानि सर्वलक्षणानि तेषा-मानुगुण्येन वर्णनीय इति स तेन, कलशार्णोराशेर्महाब्धेः कन्यका लक्ष्मीस्तस्या

निसर्गोदग्र-शक्ति-निराकृत-कुमारेण कुमारेणानेन धरण्याः पति-रात्मनो नियतममन्यत धन्यतममन्ववायम् ।

कालाद् बहोरथ महीं विरहासहिष्णु-
माश्वास्य नव्यनिजशाश्वतकीर्तिमूर्त्त्या ।
नानागुणश्रवणकौतुकिनां सुराणां
नाथेन सख्यमभजन् नरसक्षितीशः ॥ ७० ॥

अतः परमनुचिन्तित-निखिल-जन-हित-कृत्यैः, अमात्यैः, अनुनीय समानीतः स्पृहणीय-विनीति-नीति-मुख-महनीय-गुण-गण-समुच्चरित-निधिरच्युत-धरणीपतिः स्वयंवरादरणीमवनीं प्रधानगृहिणीपदमानीय आत्मना राजन्वतीमतानीत् ।

---

रमणो विष्णुस्तस्य चरणयोः स्मरणेन निशिताः नियताश्च शुभाचारा यस्य तेन, यद्वा अनन्यतुल्येन सौजन्येनायुधानां नैपुण्येन मतेर्विन्यासेन तैश्च करणै-रित्यर्थोऽनुसन्धेयः, निसर्गोदग्रशक्त्या निराकृतः कुमारस्वामी कार्तिकेयो येन तेन, कार्तिकेयसमीपे शक्तिरायुधविशेषः स च कृत्रिमो न नैसर्गिक इति भावः, कुमारेण धरण्याः पतिरात्मनोऽन्ववायं वंशं नियतं यथा स्यात्तथा धन्यतममन्यत ।

**कालादि**ति। अथ बहोः कालाद् चिरकालं राज्यं विधायेत्यर्थः। विरहा-सहिष्णुं महीम् , स्वप्रतिनिधित्वेन निजशाश्वतकीर्तिमूर्त्याऽऽश्वास्य नानागुण-श्रवणकौतुकिनां सुराणां नाथेन सह नरसक्षितीशः सख्यमभजच्चकार, सहासनं गोत्रभिदाऽध्यतिष्ठद्देवमूर्त्येतिभावः । "नरस" इतिकविप्रेमप्रयुक्ता व्यवह्रियमाणा नरसिंहदेवस्य संज्ञा, एवमेव ४७ पद्ये गृहीतमात्रे युधीत्यादि-पद्येऽपि " कृपानिधिः श्रीनरसक्षितीशः " इति पाठान्तरम् ।।७०।।

**अत** इति । अतः परमनुचिन्तितसकलप्रजाजनहितकृत्यैः अमात्यैरनु-नीय समानीतोऽच्युतधरणीपतिः स्पृहणीयविनयनयादिमान्यगुणगणानां समुच्चरितः प्रख्यातो निधिरभूत् । सः, स्वयं वरेणाद्रियत इति स्वयंवरादरणी

अनुकल-जाज्वल्यमान-मणि-ज्योतिरातप-जाल-जटिलेषु, बिलेशय-तिलक-फणा-फलकेषु, निसर्ग-निशिताग्रे निदान-क्रोड-दंष्ट्रा-क्रकच-चक्रे, जलद-मार्ग-लङ्घन-जङ्घालेषु, शिखरिशृङ्गजालेषु च निषद्य निर्वर्तित-तीव्रतर-तपोनिरन्तरा वसुन्धरा निखिल-गुण-निरवद्यं नृग-नहुष-भरत-भगीरथ-नलादि-नृपालानासाद्य-नीत्यु-द्योत-विद्योतमानमेनमासाद्य प्रत्यपद्यतामन्दमानन्दम् ।

महीमहेन्द्रस्य तस्य स्वान्तमधिवसन्तम्, अरविन्दनयनम्, अभिगन्तुमिव सन्ततमुरोऽन्तराल-भुज-तटान्तरयो-रविन्दतां वसतिमिन्दिरावसुन्धरे। अथ नरपतेरस्य स्वभाव-सुभगं वपुर्नन्दनमिव वसन्तः, नयमिव विनयः, नालीक-मुकुलमिव विकासः, नदी-नायकमिव विधूदयः, नक्षत्रेशमिव शरदागमः, नागेन्द्रमिव मदोदयः, नारायणभुजमध्यमिव

---

(कर्त्तरि ल्युट्) तादृशीम्, अवनीं प्रधानगृहिणीपदमानीयाऽऽत्मना स्वयं राजन्वतीं प्रशस्तराजयुक्तामतानीदिति ।

अनुकलेति । अनुकलं जाज्वल्यमानानि यानि मणिज्योतींषि तेषा-मातपजालेन जटिलेषु बिलेशयस्यानन्तस्य शेषस्य फणाफलकेषु, तथा निसर्गेण निशिताग्रे निदानक्रोडस्यादिवराहस्य दंष्ट्रा एव क्रकचः ( आरा इति ख्यातः ) तस्य चक्रे, जलदमार्गस्याकाशस्य लङ्घने जङ्घालेषु अतिजवेषु, शिखरिशृङ्गजालेषु च निषद्य स्थित्वा ( पर्वतानां महीधरसंज्ञकत्वादिदमुत्प्रे-क्षितम् ), निर्वर्तितं यत्तीव्रतरं तपस्तेन निरन्तरा निरवकाशा वसुन्धरा निखिल-गुणनिरवद्यं नृगनहुषभरतभगीरथनलादिनृपालैरप्यनासाद्यो यो नीत्युद्द्योत-स्तेन विद्योतमानमेनमासाद्यामन्दमानन्दं प्रत्यपद्यत ।

महीति । अथ नरपतेरस्य स्वभावसुभगं वपुर्नवयौवनमद्योतयत । कः-किमिव, कीदृशं च तद्यौवनमभूदित्याह—नन्दनमिवेत्याद्यं नवयौवनमित्यन्तं

कौस्तुभमणिः, अद्योतयत नतमध्याजननयनामृताप्लावनम्, नलिनशरसञ्जीवनम्, नातिललितरसभावनम्, नासत्यादि-रूपपरिभावनम्, नवयौवनम्।

शरणागत-नरपालक-लोकालिक-भाग-भावुक-रेखा-मातृका-रेखायितोर्ध्वरेखाञ्चल-प्रपञ्चित-मत्स्य-रेखया मकरकेतनमधो विधायेव वर्त्तमानं संवाहनपर-वरारोहा-परिषदुरोरुह-कुम्भ-सम्भावनार्हता-प्रकाशन-कुशल-कलश-चिन्ह-समन्वितम्, अनु-दिनमहमहमिकया विनमतामवनिपतीनाममित-बहुविध-मणि-गण-स्थपुटित-कठिन-किरीट-कोटि-संचयेनापि कठिनतां नादधाद-वनिभुजश्चरणयुगलम्। सामन्त-वसुन्धराधिप-कुन्तल-कुसुम-वान्त-मकरन्द-पूर-निरन्तर-क्षालनयेव चरणारविन्दतलान्तरे कमल-कुलिशातपत्राकाररेखाः प्राकाशन्त।

---

सर्वं स्पष्टम्, विशेषस्तु नक्षत्रेशश्चन्द्रः, नलिनशरः कामः, नालीकं कमलम्, नासत्यौ अश्विनीकुमारौ, नतमध्याजननयनामृताप्लावनं नताङ्गीजननयना-नन्दकरम्।

**शरणागतेति**। शरणागता ये नरपालकलोकास्तेषामलिकभाग-भावुकी ललाटे भवनशीला या रेखा, तस्या मातृकाया वर्णमातृकाया रेखा-यिता योर्ध्वरेखा पादतलवर्तिनी तस्या अञ्चले प्रपञ्चिता या मत्स्यरेखा तया मकरकेतनमधो विधायेव वर्त्तमानं न्यक्कृतकामदेवमित्यर्थः, संवाहनपरा या वरारोहास्तासां परिषदो य उरोरुहकुम्भास्तेषां संभावनं सेवनं तस्यार्हितायाः प्रकाशने कुशलेन कलशचिन्हेन समन्वितम्, अनुदिनमहमहमिकया विनमतामवनिपतीनाममितैर्बहुविधैर्मणिगणैः स्थपुटित उन्नतानतीकृतो यः कठिनकिरीटकोटिसंचयस्तेनापि अवनिभुजश्चरणयुगलं कठिनतां नादधौ। सामन्ता ये वसुन्धरा-

अनवरतमखिल-दैवत-पूजोपकरणता-समासादित-सुकृत-परिणतिभिश्चरणतामस्य समश्नुवानं बिसप्रसूनं शश्वदशेष-जगदीश्वर-वदनसहस्रपत्रैर्वरिवस्यामजस्रमाशिश्रियत्।

असत्कुलाधिपतिराप जगत्त्रयाधः-
पातित्यमित्यपयशः परिमार्ष्टुमेव ।
प्राप्याधिकोन्नततरप्रपदत्वमस्य
कालाद्बहोरवहतां कमठौ प्रशस्तिम् ॥ ७१ ॥

मनोज्ञतारुण्यमदद्विपेन्द्रनिदम्भनस्तम्भविडम्बनार्हम् ।
उपर्युपर्यूरुयुगं प्रवृद्धं प्रियाजनप्रेमभरैरिवास्य ॥ ७२ ॥

श्रीनृसिंहकुमारोऽयं सिंहसंहननोऽभवत् ।

---

धिपास्तेषां कुन्तलकुसुमैर्वान्तो यो मकरन्दपूरस्तेन निरन्तरं क्षालनयेव चरणारविन्दस्यान्तरे कमलकुलिशातपत्राकारा रेखाः प्रकाशन्त ।

**अनवरते**ति । अनवरतं निरन्तरमखिलदैवतानां पूजोपकरणतया समासादिसुकृतपरिणतिभिरेतस्य चरणरूपतापदवीं समश्नुवानं सत् बिसप्रसूनं कमलं शश्वदेवाशेषैर्जगदीश्वरवदनसहस्रपत्रैरजस्रमस्य वरिवस्यामशिश्रियत् ।

**अस्मदि**ति । असत्कुलाधिपतिर्जगत्त्रयाधःपातित्यमापेत्यपयशः परिमार्ष्टुमेव कमठौ अस्याधिकोन्नततरप्रपदत्वं प्राप्य बहोः कालादनन्तरं प्रशस्तिमवहताम् । अच्युतदेवः पीनसामुद्रिकलक्षणोपेतचरणोऽभूदित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ७१ ॥

**मनोज्ञे**ति । मनोज्ञस्तारुण्यमद एव द्विपेन्द्रस्तस्य निदम्भनस्तम्भस्य निबन्धनस्तम्भस्य विडम्बनमनुकरणं तदनुरूपम् । अस्योरुयुगं प्रियाप्रेमभरैरिवोपर्युपरि प्रवृद्धम् । उपेन्द्रवज्रा वृत्तम् ॥ ७२ ॥

**श्रीनृसिंहे**ति । श्रीनृसिंहस्यायं कुमारस्तस्य श्रीनृसिंहकुमारशब्दस्य सिंहमध्यतया सिंहसंहननो वराङ्गरूपोपेतोऽभवत् इत्यत्र किमिव चित्रं,सांप्रत-

सिंहमध्यतया तस्य चित्रं किमिव साम्प्रतम् ॥७३॥

सकल-कला-कलाप-चातुर्य-गाम्भीर्य-करुणा-रसौदार्य-शौर्याराधन-वितरणादि-स्पृहणीय-महनीय-गुण-गणानाम्, असम्बाध-संचरणस्य हृदयेऽवकाशं प्रस्तावयितुमिव विस्तारमगात् वक्षस्तटम् ।

प्रफुल्ल-कल्हार-पल्लव-तल्लज-स्थलारविन्द-कान्ति-सन्तति-सन्तताहरण-परिणत्येव व्यक्तरागं हस्तयुगं समस्त-विमत-पार्थिव-साम्राज्य-रमा-निरन्तर-सञ्चरणेनेव व्यञ्जयति स्म अनन्यसामान्यं काठिन्यम् ।

विस्तृत-वक्षस्थल-लक्ष्मी-सौध-पार्श्व-द्वय-निक्षिप्त-मणि-

---

मुचितम् । किञ्च एकावयवस्य (मध्यस्य) सिंहसदृशतोऽन्येषामवयवानामपि तथात्वमेवोचितम्, अन्यथा वैगुण्यापातात् । तेन सिंहमध्यस्य सिंहसंहननत्वे न किमप्याश्चर्यमुचितमितिभावः । अनुष्टुब् वृत्तम् ॥ ७३ ॥

**सकले**ति । सकलकलाकलापादीनां वितरणादीनां दानादीनां गुणगणानां च असम्बाधेन सावकाशं संचरणस्य हृदयेऽवकाशं प्रस्तावयितुमेव विस्तारमगाद्वक्षस्तटम् ।

**प्रफुल्ले**ति । प्रफुल्लो यः कल्हारः पल्लवतल्लजं, स्थलारविन्दं च तेषां कान्तिस्तस्याः सन्ततं निरन्तरमासमन्ताद्धरणं तस्य परिणत्या इव हस्तयुगम् व्यक्तरागमरुणमभूत् । समस्तानां विमतपार्थिवानां साम्राज्यरमायाः ग्रहण-विसर्जनाभ्यां यन्निरन्तरं सञ्चरणं तेनेव हस्तयुगमनन्यसामान्यं काठिन्यं व्यञ्जयति स्म, गतागताभ्यामध्वन इव हस्तस्यापि कार्कश्यमजनि ।

**विस्तृते**ति । विस्तृतायाः वक्षस्थललक्ष्म्याः यत्सौधं तस्याः पार्श्वद्वये निक्षिप्तौ

कलश-लक्ष्मी-समान-कक्ष्यारभटी-सुमांसलमंसयुगलं तरुणिमा-रम्भ-स्तम्बेरम-कुम्भभावमवालम्बत ।

रभसाश्लेष-रसाभिलाषिणीनां राजन्यकन्यकानां रागाति-योगेन युगपदनुकलमभिपतद्भिश्चेतोभिरिव निरन्तरा, जय-दुन्दुभि-मद-सिन्धुर-निनद-निरोध-धौरन्धर्य-हर्षोन्मेष-पोष-समिन्धानेव परिणाहमवहत बन्धुरा कन्धरा ।

हृदन्तर-निरन्तर-संचरदञ्जन-गिरि-सप्रभ-कैटभारि-मुख-कञ्ज-मुखर-पाञ्चजन्य-निनद-प्रपञ्च-कञ्चुकित इव,रसना-चत्वर-विसृत्वर-निरवद्य-विद्या-कलापाकूपार-धीरवापूरित इवागाद-कुण्ठः कण्ठः पिकस्वरताम् ।

लावण्याब्धिभवो नित्यं तारुण्यशरदुज्ज्वलः ।

---

यौ मणिकलशौ तयोर्या लक्ष्मीस्तस्याः कक्ष्यारभटी समानतासंरम्भो यस्य तादृशं सुमांसलमंसयुगलं, तरुणिमारम्भ एव स्तम्बेरमस्तस्य कुम्भभावमवालम्बत ।

**रभसेति** । रभसेन वेगेन य आश्लेषस्तत्र यो रसस्तत्र प्रणयिनीनां राजन्य-कन्यकानां रागातियोगेन युगपदनुकलमभिपतद्भिश्चेतोभिरिव बन्धुरा नतोन्नता कन्धरा ग्रीवा निरन्तरेव निरवकाशेव जयदुन्दुभीनां मदसिन्धु-राणां च निनदानां निरोधधौरन्धर्येण यो हर्षोन्मेषपोषस्तेन समिन्धानेव परिणाहमवहत ।

**हृदन्तर** इति। हृदन्तरे निरन्तरं सञ्चरद् यदञ्जनगिरिसप्रभस्य कैटभारे-र्मुखकञ्जं तत्र मुखरं यत् पाञ्चजन्यं तस्य निनदप्रपञ्चेन कञ्चुकित इवाच्छन्न इव, रसनाचत्वरविसृत्वरी या निरवद्या विद्या तस्याः कलापस्य यो धीरव स्तेनापूरित इवागादकुण्ठः कण्ठः पिकस्वरताम् ।

**लावण्येति** । लावण्याब्धिसमुत्पन्नस्तारुण्यशरदृतुना प्रकाशमानो

असंख्येयकलश्चित्रमाननेन्दुः प्रवर्धते ॥ ७४ ॥

अनवद्यतदाननोपमाशादुरितेनैव शशी मषीविलिप्तः ।
कमलं च सहस्रधा विभिन्नं कथयेत्साम्यकथां बुधः कथं वा ॥७५॥

प्रतिनव-लावण्य-पूर-विहार-पारीण-विलोचन-वैसारिण-युगापाङ्ग-वालधि-विलम्बिनी-कान्तिसुधा-सान्द्र-कपोल-युगल-चुबुक-भाग-लग्न-प्रत्यग्र-जङ्घाल-नीलिका-कालिकेव, कान्त-निसर्गोदग्र-कपोल-युगलाघ्राण-मधुराधर-बिम्ब-चुम्बन-लालस-विलासिनी-परिषदसकृत्प्रहित-संगतासित-कटाक्ष-वीक्षाङ्कुर-

---

ऽसंख्यातकलाकलापललित आननेन्दुः प्रवर्धते न क्षीयते इति चित्रम् । अनुष्टुब्वृत्तम् ॥ ७४ ॥

**अनवद्ये**ति । अनवद्यस्य तदाननस्योपमाशैव दुरितं तेनैव शशी मषी-विलिप्तः सकलङ्कोऽभूत् । कमलं सहस्रधा विभिन्नं सहस्रदलत्वात्तेषाम्, तद्बुधः कथं साम्यकथां कथयेत्—य एव साम्यमचीकमत स एव दण्डितोऽभूदिति न कश्चिदपि तदुपमानाय साहसमाचरतीत्यहो अनुपमेयता तन्मुखस्य। हरिणीप्लुता वृत्तम्। सयुगात्सलघू विषमे गुरूर्युजिनभौ च भरौ हरिणीप्लुतेति तल्लक्षणात् ॥ ७५ ॥

**प्रतिनवे**ति । प्रतिनवो यो लावण्यपूरस्तत्र यो विहारस्तत्र पारीणौ यौ विलोचनवैसारिणौ नयनमीनौ तयोर्युगं युगलं तस्य बालधिरूपयोरपाङ्गयोर्विलम्बिनी, किञ्च कान्तिसुधानिरन्तरे कपोलयुगले चुबुकभागे च लग्ना प्रत्यग्राऽभिनवा जङ्घाला चपला नीलिकाया ( ' काई ' इति प्रसिद्धायाः ) कालिकेव श्मश्रुराजिरराजिष्टेत्यग्रेणान्वयः । या च श्मश्रुराजिः कान्तं निसर्गोदग्रं च यत् कपोलयुगलं तस्या घ्राणे, तथा मधुराधरबिम्बस्य चुम्बने च लालसा यासां ताश्च ताः विलासिन्यस्तासां परिषदाऽसकृत्प्रहिताः संगता विरूढाश्च येऽसिताः कटाक्षास्तेषां वीक्षा प्रत्यक्षी-

शङ्कामङ्कुरयन्ती, भक्त्यतिशय-प्रसन्न-पन्नगपति-शयन-लालन-प्रसारित-शयन-प्रकाश-संशयकरी, चिकुर-भार-परिणत-शृङ्गार-रस-पूर-तट-बन्धायित-समुन्नत-ललाट-पार्श्व-द्वय-दृश्य-निष्यन्द-सन्देहकारिणी, तरुणिम-वारणेन्द्र-मदरेखानुकार-पारीण-कुसुमचापादिमाभिरूप-परिषदसकृद्विजय-प्रशस्त-वर्णालि-केलि-निर्णायिका, धरणीन्द्र-वदन-चन्द्रमसि श्मश्रुराजि-रराजिष्ट ।

करुणा-वरुणालय-वन-विहार-कृतावगाह-सरोरुह-गृहा-भितः-प्रसारित-बाहा-विक्षेप-समुत्क्षिप्त-तरङ्ग-स्तोमैरिव विस्तारितम् , शतपत्र-नयन-चारित्र-विविध-स्तोत्र-श्रवण-पात्रता-

---

करणं तस्या अङ्कुरशङ्कामङ्कुरयन्ती अभूत्। भक्त्यतिशयेन प्रसन्नो यः पन्नगपतिशयनस्तस्य लालनाय प्रसारितं यच्छयनं तस्य प्रकाश आभा तस्य संशयकरी श्यामस्य भगवतः शय्याया अपि श्यामत्वादियमतिशयोक्तिः। चिकुरभाररूपेण परिणतो यः शृङ्गाररसः (शृङ्गारस्य कृष्णश्यामत्वात् ) तस्य पूरः प्रवाहस्तस्य तटबन्धवदाचरितं समुन्नतं यत् ललाटं तस्य पार्श्वद्वये दृश्यौ यौ निष्यन्दौ तयोः सन्देहकारिणी, अथ तरुणिमैव वारणेन्द्रस्तस्य मदरेखानुकारपारीणा तथा कुसुमचापादिमा मदनप्रभृतयो येऽभिरूपाः सुन्दरास्तेषां परिषदो योऽसकृद्विजयस्तस्य प्रशस्तेर्या वर्णालिः सैव केलिस्तस्याः निर्णायिका, श्मश्रुरूपेण विजयलेखस्तेनाच्युतदेवेन लब्धोऽभूदित्यर्थः। एवंविधा धरणीन्द्रवदनचन्द्रमसि श्मश्रुराजिरराजिष्ट ।

करुणेति । करुणावरुणालय अपाङ्गापदेशे दयारूपे समुद्रे वनविहारेण जलविहारेण हेतुभूतेन कृतोऽवगाहो यया तादृशी या सरोरुहगृहा लक्ष्मीस्तयाऽभितः प्रसारिते ये बाहे बाहू भुजौ तयोर्विक्षेपेण समुत्क्षिप्ता ये तरङ्गास्तेषां स्तोमैरिव विस्तारितम् । दयासमुद्रे राज्ञोऽपाङ्गे लक्ष्मीर्न्यवात्सीदिति

पवित्रं श्रोत्रयुगमादरेण समाश्लिष्यदिवातिमात्रमा-यतापाङ्गम् ।

प्राङ्गण-रिङ्गण-निपुण-विहङ्गेश-रथ-नताङ्गी-प्रतिफलदङ्ग-पिशङ्गिम-शङ्कनीयेन, गति-प्रसर-प्रतीप-श्रवणोपरि समुपेत-कोपोदय-निरूपणीयेन शोणिम्ना, सुपर्वाधिप-कुमार-सुरभि-चाप-मुखाभिरूप-विजय-प्रशंसि-नासावंश-ध्वज-दण्ड-संगत-कौशेय-पताका-संशयकरेण, सन्तत-सन्निहित-निज-नन्दिनी-संदर्शनागत-दुग्ध-सिन्धु-सगन्धेन, निखिल-कंजमुखीजन-नयन-जीवंजीव-रञ्जन-कौमुदी-पुञ्ज-मञ्जिम-व्यञ्जकेन धवलिम्ना,

---

इति भावः। तेन य कश्चन तदपाङ्गगोचरतां गतः सर्वोऽपि तेन दयया निवृत्त-दारिद्र्यतां नीत इति ध्वन्यते। शतपत्रनयनस्य विष्णोश्चरित्रसमूहसंबन्धि विविधस्तोत्राणां श्रवणपात्रतया पवित्रं श्रोत्रयुगमादरेणातिमात्रमायतमपाङ्गं समाश्लिष्यदिव आलिङ्गितवानिव, तस्य नेत्रप्रान्तावाकर्णविसृतावास्तामिति भावः।

**प्राङ्गणेति**। अथ नेत्रयोः शोणश्वेतश्यामवर्णत्रयवत्तां वर्णयति। तत्र 'शोणिम्ने'त्यन्तेन शोणता, 'धवलिम्ने' त्यन्तेन धवलिमा, 'कालिम्ने' त्यन्तेन च कालिमा वर्णितेत्यवगन्तव्यं यस्य च 'अत्यन्तगम्भीरकान्तिपारावारकृताव-तरणे'त्यादिनान्वय इति बोध्यम्। प्राङ्गणरिङ्गणे निपुणा या विहङ्गेशरथस्य गरुडवाहनस्य नताङ्गी तस्या प्रतिफलन् यः पिशङ्गिमा तद्वच्छ-ङ्कनीयेन, गतिप्रसरस्य प्रतीपयोः श्रवणयोरुपरि समुपागतो यः कोपो-दयस्तेन निरूपणीयेन शोणिम्ना, सुपर्वाधिपकुमारो जयन्तः सुरभिचापमुखाः कामप्रभृतयश्च येऽभिरूपास्तेषां विजयप्रशंसी यो नासा-वंशस्तस्य ध्वजदण्डे संगता या कौशेयपताका तस्याः संशयकरेण, सन्तत-सन्निहिता या निजस्य नन्दिनी स्वकन्या लक्ष्मीस्तस्याः संदर्शनायागतो यो दुग्धसिन्धुस्तस्य सगन्धेन तत्संबद्धेन, निखिलस्य कञ्जमुखीजनस्य ये नयन-रूपा जीवंजीवाश्चकोरास्तेषां रञ्जनं रञ्जयितृ यत् कौमुदीपुञ्जं तस्य मञ्जुत्व-

सन्तत-ध्यान-सन्दर्शन-वश-पुरः-सन्निहित-पन्नग-रिपु-रथ-स्थिर-प्रतिबिम्ब-कान्ति-संभावनीयेन, विजृम्भित-स्वाभाविक-प्रभा-सुधा-महाम्भोधि-मध्य-निष्पन्द-निलीन-करुणा-रस-वर्षामोघ-नील-मेघ-पृथुक-श्लाघनीयेन कनीनिका-कालिम्ना, अत्यन्त-गम्भीर-कान्ति-पारावार-कृतावतरण-शोण-नद-भागीरथी-तरणिकुमारिका-चातुरीम् ऊरीकुर्वाणम्, परधरणीश्वराणाम् ऐश्वर्य-निर्माण-स्थिरीकरण-संहरणानुगुण-गुणत्रयमिव प्रकाशयद् आश्रित-वर्ग-समासादितानुमोद-प्रसाद-गुणम्, अखिलानन्द-संदायकम् अङ्गनाजनानुराग-सागर-सुधाकरो वदनराज-बिम्ब-पूजा-राजीव-कान्ति-समुत्तेजकम्, अराजत लोचनयुगम्।

पैशुन्य-परापवाद-पर-नारी-वर्णनाकर्णन-निरोध-विहित-प्राकार-मण्डलानुकारिभिः एकवार-श्रुताशेष-विद्वेषि-वसुमती-

---

प्रकटयित्रा धवलिम्ना, सन्ततं ध्याने यत्संदर्शनं तेन वशो वशीभूतः पुरःसन्निहितश्च यः पन्नगरिपुरथो हरिस्तस्य स्थिरो यः प्रतिबिम्बस्तस्य कान्तिस्तद्वत् संभावनीयेन, विजृम्भिता या स्वाभाविकी प्रभा सैव सुधाम्भोधिस्तस्य मध्ये निष्पन्दं निलीनो यः करुणारसवर्षणशीलोऽमोघो नीलमेघपृथुको नीलमेघखण्डस्तद्वत् श्लाघनीयेन, कनीनिकाकालिम्ना अत्यन्तगम्भीरे कान्तिपारावारे कृतावतरणायाः शोणनदभागीरथीकालिन्द्यस्तासां चातुरीमूरीकुर्वाणम्, परे ये धरणीश्वरास्तेषामैश्वर्यस्य निर्माणं स्थिरीकरणं संहरणं च शुक्लादिगुणव्याजेन प्रकाशयत्, आश्रितवर्गेण समासादितावनुमोदप्रसादौ गुणौ यस्य तत्, क्रोधगुण आश्रितैर्नोपलक्षित इति भावः। राजा चन्द्रः, वदनराजो मुखशशीत्यर्थः, स्पष्टमन्यत्। इत्थंभूतं लोचनद्वयमराजत।

पैशुन्येति। पैशुन्यं परापवादः परनारीवर्णनाकर्णनञ्चैषां निरोधाय विहितं यत् प्राकारमण्डलं तस्यानुकारिभिः, एकवाराकर्णितस्य(विषयजातस्य)

पाल-राज्य-रमा-मृगी-समाज-समाकर्षण-पाश-वलय-निकाशै-र्लेखा-वलयैः-समेतमवर्णनीयं कर्णद्वयम् अनवरत-समागच्छ-दच्छ-नयन-शतच्छद-च्छवि-रमा-समुपवेशनाय प्रतिष्ठितं विष्टर-युगमिव व्यराजिष्ट ।

चम्पकमुकुलादिकमखिलमुपमानजातमपजित्य जगत्यन्यत् पुनरस्ति वा न वेत्युद्ग्रीविकया विलोकयन्निव शाश्वत-सौमनस्य-प्रशस्य-निज-निःश्वसित-मरु-पर्युदञ्चदामोद-भर-प्रपञ्च-प्रणुन्न-भुवन-समुन्नतः, अभ्यर्णगत-वदन-शतपर्ण-सौरभ-विशेष-निर्णयायेव किञ्चिदवनीतलचञ्चलः प्राशंसि शशिवंशमणे-र्नासावंशः ।

पुरातन-पुण्य-परिपाक-रचित-सपत्नलोक-साम्राज्य-रमा-

---

तथा विद्वेषिणो ये वसुमतीपालास्तेषां राज्यसंबन्धिनीः या रमास्तासां समाजस्य समूहस्य समाकर्षणाय पाशवलयसदृशैर्लेखावलयैः समेतमवर्णनीयं कर्णद्वयमनवरतं समागच्छन्ती याऽच्छा ( दर्शकजनस्य ) नयनशतपत्रच्छवि-रेव रमा तस्याः समुपवेशनाय प्रतिष्ठितं विष्टरयुगमिव व्यराजिष्ट ।

**चम्पके**ति । चम्पकमुकुलादिकमखिलमुपयानजातमपजित्य 'जगति किमप्यन्यदस्ति नास्तिवे'ति बुद्ध्योद्ग्रीविकया विलोकयन्निव, शाश्वतं यत् सौमनस्यं सौगन्ध्यं तेन प्रशस्यो यो निजनिःश्वसितस्य मरुत् तेन पर्युदञ्चन् य आमोदभरप्रपञ्चस्तेन प्रणुन्नं तिरस्कृतं यद्भुवनं तत्र समुन्नतः । अत्र हि ' मरु पर्युदञ्चत् 'इत्यस्य स्थाने ' मरुत्पर्युदञ्चन् ' इति पाठः संभाव्यते । ' मरुपर्युदञ्चद् ' इति यथास्थितपाठे तु ' मरुः कुरवकः ' इति शब्दस्तोम-महानिधिः, तेन निःश्वसितमेव मरुरिति विग्रहो विधेयः । अभ्यर्णगतं यद्वदन-शतपर्णं तस्य सौरभविशेषस्तस्य निर्णयायैव किञ्चिदवनीतलं प्रति चञ्चलः शशिवंशमणेर्नासावंशः प्राशंसि, लोकैरिति शेषः ।

समाकर्षण-यन्त्र-वलय-विलास-गन्त्रीम्, अशेष-जगतीपती-नामेष तिलको भविष्यतीति व्यक्तीकरणाय सितपत्र-पत्र-निर्वर्तित-तनुरूप-मुद्रानुकार-निर्णिद्राम् ऊर्णाम् उद्वहन्, दुष्ट-धरणीभृदहृष्टागमानध्यायाष्टमी-स्पष्टीकरणाभिनिविष्ट-कुमुदिनी-ष्टार्ध-निर्धारणीयः, व्युष्ट-कमल-समान दृष्टि-निविष्ट-रमा-पुरः-प्रतिष्ठापित-कनकोन्मृष्ट-विहार-शारि-फलक-दृष्टान्तो महीपते-रद्योतिष्ट ललाटपट्टः ।

गाम्भीर्य-नित्य-विसृत्वर-सत्व-गुण-बहिर्निरस्त-शैशव-चापल संयुक्त-विस्तृततम-मस्तकि-मति प्रस्तावकः, कमनीय-वदन-कुमुदिनी-रमण-लावण्यपूर-रत्नाकर-लहरि-लय-बहिर्निरुद्ध-

---

**पुरातने**ति । पुरातनपुण्यपरिपाकरचितायाः सपत्नलोकस्य साम्राज्य-रमायाः समाकर्षणाय यत् यन्त्रवलयं यन्त्रचक्रं तस्य विलासगन्त्रीं लीला-शकटीम् । अथ च अशेषजगतीपतीनामेष तिलको भविष्यतीति व्यक्तीकर-णाय, सितपत्राणां हंसानां पत्रैर्निर्वर्तिता या तनुरूपा सूक्ष्मा मुद्रा तस्या अनुकारे निर्णिद्रामूर्णां वर्तुलाकारां श्वेतरोमपङ्क्तिमुद्वहन्, दुष्टधरणीभृत्सं-बन्धि यदहृष्टमहर्षो दुःखं, तस्यागमस्याऽनध्यायरूपा याष्टमी तस्याः स्पष्टी-करणायाभिनिविष्टोऽभिनिवेशवान् यः कुमुदिनीष्टश्चन्द्रस्तस्यार्धं तद्वन्निर्धार-णीयः, व्युष्टं प्रभातं (' व्युष्टं प्रभातं द्वे क्लीबे ' इत्यमरः ) तत्र यत् कमलं तत्समाना या दृष्टिर्नयनं तयोर्निविष्टा या रमा लक्ष्मीस्तस्याः पुरः प्रतिष्ठापितं यत्कनकोन्मृष्टं कनकेनोपरि मृष्टं, कनकद्रवलिप्तमितियावत्, विहारस्य क्रीडायाः सम्बन्धि शारिफलकं तद् दृष्टान्तो यस्य स तादृशो महीपतेर्ललाट-पट्टोऽद्योतिष्ट ।

**गाम्भीर्ये**ति । गाम्भीर्येण नित्यं विसृत्वरो यः सत्वगुणस्तेन बहिर्निरस्तं यच्छैशवचापलं तेन संयुक्तो यो विस्तृततमो मस्तकी फणाधरस्तस्य मतेः प्रस्तावकस्तद्बुद्धिजनकः, कमनीयं वदनमेव कुमुदिनीरमणस्तस्य लावण्यपूर

निवर्तमान-विकर्तननन्दनी-नन्दनीयः, सौन्दर्य-रमा-समेत-तरुणिम-विहार-संकेत-तमाल-वन-कुञ्जभाव-समञ्जस-परिहृत-पञ्चशर-निदाघ-वञ्चित-चञ्चलनयनादृगञ्चल-पथिक-श्रमः, समदृश्यत यौवनबर्हिण-बर्हभरानुरूपः केशकलापः ।
किन्नु चापमिव कन्दलत्फलम्, जातरूपमिव जातसौरभम् ।
अस्फुरद् वपुरतीव मेदिनीनायकस्य नवयौवनोदयात् ॥७६॥

विज्ञैरीक्षणगोचरो नयगुणो वीरो रसो मूर्त्तिमान्
प्रत्यर्थिक्षितिपैस्सुहृद्भिरुदयत्प्राणो नभःपादपः ।
धर्मः संघटिताकृतिः प्रकृतिभिस्ताम्राधराभिः पुनः
साकारः स्मर इत्यपि क्षितिपतिस्सर्वैर्मुदाऽगृह्यत ॥ ७७ ॥

---

एव रत्नाकरस्तस्य लहरिलयैस्तरङ्गवलयैर्बहिर्निरुद्धा, अत एव निवर्तमाना या विकर्त्तननन्दनी यमुना तद्वन्नन्दनीयस्तत्समः समुद्रसंभेदावरुद्धयमुनाप्रवाह इव प्रशंसनीय इति भावः । नीलतया लम्बतया च सादृश्यम् । सौन्दर्यरमया(नायिकया) समेतः संगतो यस्तरुणिमा ( नायकः ) तयोर्विहारस्य सङ्केतस्थलीभूतो यस्तमालवनस्य कुञ्जस्तद्भावस्य समञ्जसः समुचितः परिहृतः पञ्चशररूपनिदाघेन वञ्चितानां प्रलब्धानां चञ्चलनयनानां दृगञ्चलरूपपथिकानां श्रमो येन सः, यौवनबर्हिणस्य यौवनकेकिनो बर्हभरानुरूपः पिच्छसमूहसदृशः केशकलापः समदृश्यत ।

**किन्विति** । कन्दलत्फलमङ्कुरितफलमिन्द्रधनुरिव(तस्य वपुर्धनुषो नयनादीनि फलानि ) जातसौरभमुत्पन्नसुगन्धं जातरूपमिव सुवर्णमिव मेदिनीनायकस्य वपुर्नवयौवनोदयादस्फुरदशोभिष्ट किं नु ? ॥७६॥

**विज्ञैरिति** । धीमद्भिर्वपुषा युतो नयगुणः शौर्यं वपुष्मत्पुन-
विद्विड्भूपगणैः सुहृद्वरगणैः सप्राणकल्पद्रुमः ।
साक्षाद्धर्म इति प्रजाभिरुरुसत्सौन्दर्यसंपच्चणैः
कान्तानां विसरैर्मनोज इति स ज्ञातोऽच्युतो भूपतिः ॥

विलाससदनं विशेषज्ञतायाः, विश्वासभूमिर्विश्राणनस्य, सिद्धिक्षेत्रं शक्तित्रयस्य, आलवालस्सुशीलानाम्, आलम्बनं गाम्भीर्यस्य, शरण्यं सौजन्यस्य, समाजस्सुचरितानाम्, संकेतभवनं संगीतस्य, सौहित्यं साहित्यस्य, अनपायभूमिरुपायानाम्, पण्यवीथिका पुण्यानाम्, समाहारः साहसिकतायाः, सन्दोहः सौन्दर्यस्य, सर्वस्वं सरसतायाः, नित्यनिवासः सत्यवचसाम्, ऐकमत्य विशुद्धीनाम्, उदवसितं शौर्यविलासितानाम्, सूतीगृहं नीतिपथस्य, सामानाधिकरण्यं प्रामाणिकगुणानां स भूपतिरभूत्।

अथ कदाचिद् हर्म्यान्तरान्निर्गत्य धरणीजानिः 'आजानेयमानय' इति समीपवर्तिनं कञ्चन कञ्चुकिकलाध्यक्षमादिक्षद्।

तदा विनिर्गत्य तुरङ्गशालां
प्रविश्य पल्याणिनमेव पूर्वम्।
चेतोऽतिशायिस्यदसंप्रदाय-
मनीनयत् सोऽपि हयं रयेण ॥ ७८ ॥

---

नभःपादपः कल्पपादप इत्यर्थः। शार्दूलविक्रीडितं छन्दः ॥ ७७ ॥

**विलासे**ति। विश्राणनं दानम्। शक्तित्रयं प्रभुशक्तिरुत्साहशक्तिर्मन्त्रशक्तिश्च। सौहित्यं तृप्तिः। पण्यवीथिका विपणिः। उदवसितं गृहम्। अन्यत् सर्वं स्पष्टम्।

**अथे**ति। धरणीजानिः राजा। आजानेयः सुशिक्षितः साधुवाही तुरङ्गमः, (आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः)।

**तदे**ति। पल्याणिनं सपर्याणम्, रलयोरभेदात्। चेतोतिशायी मनसो-

उभय-पार्श्वगत-पुरुष-द्वय-हस्त-दल-निलीन-खलीन-वलय-विकृष्यमाणमपि शश्वदुपर्युद्गमनच्छलेन नभश्चरणगर्वितम्, उच्चैःश्रवसमवरोपयितुमिवेच्छन्तम्, प्रतिक्षणोत्क्षिप्त-सरभस-चलाचल-पुरोभागैकचरणतया दुर्विनीत-सर्वंसहापाल-खर्वेतर-गर्व-दर्वीकर-विष-वेगानुवेराया रजोभसित-पूर्वमिवावतारयन्तम्, वेग-विषय बान्धव-विहग-धुरन्धर-परिपन्थिभूत-वातन्धय-कुल-निर्गन्धन-रसानुबन्धेन वसुन्धरातलमिव विदारयन्तम्,

सुपर्व-सरणि-सञ्चार-दुर्वार-गर्व-ग्रह-सार्वभौम-शताङ्ग-गन्धर्व-समूहमिवाह्वयमानम्, आहव-मुख-विभ्रष्टानिष्ट-नृप-निज-गर्भ-निवासार्पण-दृष्टापराध-वसुधा-कुट्टन-क्रममिव विस्पष्टयन्तम्, अमन्द-रयानुबन्ध-वश-सन्ततोदस्त-शब्द-ग्रह-युग-

---

ऽप्यधिकः। स्यदस्य वेगस्य संप्रदायो यस्य तादृशमिति बहुव्रीहिः। रयेण त्वरया। स्पष्टमन्यत्। उपजातिवृत्तम् ॥ ७८ ॥

**उभये**ति। नभश्चरणमाकाशविहारिता। सर्वंसहापाला राजानः। उर्वरायाः सर्वसस्याढ्यायाः धरण्याः। रजो धूलिरेव भसितं भस्म तत्पूर्वं तदुपयोगपूर्वमवतारयन्तम्, गर्वसर्पस्य विषवेगोऽवतारितस्तान्त्रिकेणेव चरणेनेत्यर्थः। शिष्टमुभयपार्श्वेत्यारभ्यावतारयन्तमित्यन्तं निगदनीतार्थम्। वेगस्य विषये बान्धवो यो विहगधुरन्धरो गरुडस्तत्परिपन्थि यद् वातन्धयानामहीनां कुलं तस्य निर्गन्धनं गर्वापनयनं तत्र रसस्यानुबन्धेन कारणेन वसुन्धरातलमिव विदारयन्तम्, नागानामवनितलवासित्वात्।

**सुपर्वे**ति। सुपर्वसरणिराकाशस्तत्र संचारेण दुर्वारो गर्वो यस्य स चासौ ग्रहाणां सार्वभौमो राजा सूर्यस्तस्य शताङ्गस्य यो गन्धर्वाणामश्वानां समूहस्तमाह्वयमानम् (challenging.) आहवमुखे रणसाम्मुख्ये सति विभ्रष्टाः पलायिता येऽनिष्टनृपाः वैरिभूपालास्तेषां निजगर्भनिवासार्पणेन दृष्टापराधाया

तया पक्षि-कुलाध्यक्षाशुशुक्षणिसखावेव वेगविषये मम लक्षामिति कराङ्गुलयुगोत्क्षेपाभिनयपूर्वमिवाचक्षाणम्, समस्त-विमत-पार्थिव-समर-विजिगीषा-निरसन-सरभसोदस्त-गलहस्तकमिव विद्योतमानम्, जङ्घा-वेग-जनित-भङ्ग-सारङ्ग-कुलोपहृत-शृङ्ग-युगाङ्कनामिव शङ्कनीयम्,

वदनाग्र-लग्न-रुक्ममयाफल्गुतर-वग्गु-वल्गावलय-चमत्कारात्सलिलपानाग्रह-युगपद्गृहीत-मन्दाकिनी-कनकारविन्द-मृणाल-तन्तु-सन्दानितमुखमिव संक्रन्दनसैन्धवम्, सरभस-ग्रहण-चञ्चल-फणाञ्चल-मणि-सञ्चय-रुचि-रञ्जित-कञ्चुकि कुल-संचलच्चञ्चुभागमिव मुञ्जकेशरथम्,

प्रतिदिनमभिनवतया विरच्यमान-सकल-दिगाच्छादन-

---

वसुधायाः कुट्टनमभिहननं ताडनं दण्डनमिव विस्पष्टयन्तम्, अमन्दरयानुबन्ध-वशात्सन्ततोदस्तयोः शब्दग्रहयोः कर्णयोर्युगं यस्य तादृशत्वेन पक्षिकुलाध्यक्षो गरुडः, आशुशुक्षणिसखो वायुस्तावेव वेगविषये मम लक्षमिति कराङ्गुलयुगोत्क्षेपाभिनयपूर्वमिव कथयन्तम्, समस्तशत्रुनृपाणां या विजिगीषा तस्या निरसने सरभसोदस्तो गलहस्तको येन तादृशमिव विद्योतमानम्, जङ्घावेगेन जनितभङ्गं पराजितं यत्सारङ्गकुलं तेनोपहृतेनोपायनीकृतेन शृङ्गयुगरूपचिह्नेन शङ्कनीयं संभावनीयम्।

वदनेति। वदनाग्रलग्ना रुक्ममयी अफल्गुतरा महती वल्गुः सुन्दरी च या वल्गा तस्या वलयस्य चमत्कारात् युगपन्मन्दाकिनीकनकारविन्दमृणाल-तन्तुभिर्बद्धमुखं संक्रन्दनस्येन्द्रस्य सैन्धवमुच्चैःश्रवसमिव विराजमानम्। सरभसं सावेगं ग्रहणेन चञ्चलानां फणानामञ्चलेषु ये मणयस्तेषां सञ्चयस्य रुचिर्दीप्तिस्तया रञ्जितस्य कञ्चुकिनां सर्पाणां कुले सञ्चलंश्चञ्चुभागो यस्य तं मुञ्जकेशस्य श्रीविष्णोः रथं गरुडमिव स्थितम्।

निज-वेग-कीर्ति-च्छटा-पट-समुत्तेजन-कूर्च-कलाप-सच्छायैः, पीवरायत-स्कन्ध-भाग-केदारान्त-कन्दलदवनीन्द्र-विमल-यशः-सन्तति-कलमाङ्कुर-सन्दर्शनीयैः, असाधारण-वेग-विधूति-भय-धावित-हरिण-धारणापराध-निरोध-सावधान-सुधा-धाम-प्रेषिता-वसर-प्रतीक्षि-दीधिति-धोरणी-रमणीयैः, केसर-कलापैरुप-शोभितम्,

जन-पङ्क्ति-संदर्शनमात्र-कान्दिशीक-मृग-सन्देह-विड-म्बन-हास-विलासेन, वल्गु-भुजङ्गम-विनिर्गत-निर्मल-निर्मोक-नर्मोपदेशिना, निरङ्क-गगन-प्रेङ्खित-खुर-टङ्क-संखन्यमान-वसु-धोत्सङ्ग-पुञ्जित-धूलि-सङ्घ-निपात-साशङ्कतर-तरङ्गमालि-तिलक-

---

**प्रती**ति। प्रतिदिनमभिनवतया विरच्यमानो यः सकलानां दिशामाच्छादनो निजस्याश्वस्य वेगकीर्तिच्छटारूपः पटस्तस्य समुत्तेजनाय यः कूर्चकलापः (Brush) तत्सदृशैः। पीवर आयतश्च स्कन्धभाग एव केदारस्तस्यान्ते कन्दलद्यदवनीन्द्रस्य विमलं यशस्तस्य सन्ततिरेव कलमाङ्कुरास्तद्वत्संदर्शनीयैः, असाधारणेन वेगेन या विधूतिर्भर्त्सना तस्या भयं तेन धावितो यो हरिणस्तस्य धारणमाश्रयदानं तदेवापराधस्तस्य निरोधोऽपनयनं तत्र सावधानं यत् सुधाधाम चन्द्रस्तेन प्रेषिताऽवसरप्रतीक्षिणी च या दीधितिधोरणी रश्मिपरिपाटी तद्वद्रमणीयैः केसरकलापैरुपशोभितम्।

**जने**ति। जनपङ्क्तिसंदर्शनमात्रेण कान्दिशीको यो मृगसन्देहस्तस्य विडम्बनायावधीरणाय हासविलासभूतेन, वल्गुर्यो भुजङ्गमः (यद्वा वल्गुरिति-निर्मोकविशेषणम्), तस्माद्विनिर्गतो यो निर्मलो निर्मोकः कञ्चुकस्तस्य नर्म-क्रीडा तदुपदर्शनशीलेन, निरङ्कं नीरेखं सीमाविरहितमिति यावत्, ('अङ्को' रूपकभेदागश्चिन्हे रेखाजिभूषणे इति मेदिनी) यद्गमनं तत्र प्रेङ्खिताः खुर-टङ्कैः सम्यक् खन्यमाना ये वसुधोत्सङ्गे पुञ्जिता धूलिसङ्घास्तेषां निपातेन साशङ्कतरो (धूलिभिः स्वपूरणभयात्) यस्तरङ्गमालितिलकः क्षीराब्धि-

प्रहितामृतधारा-महिताकारेण, रोषावेश-वश-निश्शेष-चर्विता-नादर-पुनर्विमुच्यमान-दर्वीकर-वैरि-पूर्व-वेग-कीर्ति-सर्वस्व-निर्वाहकेण फेनजालेन विराजितवदनम्,

अनवरत-चञ्चल-प्रोथ-युगाञ्चलतया निज-विक्रम-मुखाद्विजय-रमायै कमपि संदेशमिव भणन्तम्, अखिल-दिशा-चक्र-युगपदाक्रमण-मन्त्रमिव जपन्तम्, कर्णगत-विमल-प्रकीर्णक-निभादवर्णनीय-पुष्प-कलिकामुपहृत्य अदृश्यतया निजाभ्याशचराय नभस्वते वेगरहस्यविशेषानिव मन्दं मन्दमुपदिशन्तम्, अविश्रान्त-चलित-खुर-पङ्क्ति-कन्दलित-धूलि-रङ्ग-संकुचित-समीप-संगततया 'प्रहृता एव वयं भवतो गतागतैः, इतः परमकस्मादस्मान् प्रति धाटी-वेग-समाटीकनैः संक्षोभ-भय-परिपाटीर्न प्रकटीकुरु' इति सर्वदा दिग्भिरिवागत्य परिरभ्य

---

स्तेन प्रहिताभिरमृतधाराभिर्महित आकारो यस्य तेन, रोषावेशवशेन निःशेषं चर्विता अनन्तरमनादरेण पुनर्विमुच्यमाना या दर्वीकरवैरिणो गरुडस्य पूर्ववेगकीर्तयस्तासां सर्वस्वस्य निर्वाहकेण फेनजालेन विराजितवदनम्।

**अनवरतमि**ति। अनवरतं चञ्चलं यत्प्रोथयुगाञ्चलं तस्य भावस्तत्ता तया, निजविक्रमयुक्तमुखाद्विजयरमायै विजयलक्ष्म्यै कमपि सन्देशं भणन्तमिव, चलप्रोथाञ्चलतयैवाखिलदिक्चक्रविजयमन्त्रमिव जपन्तम्, कर्णगता ये विमलाः प्रकीर्णकाः पुष्पगुच्छसच्छायाः कर्णोपर्यारोपिताभरणविशेषास्तेषां व्याजात् अवर्णनीयां पुष्पकलिकामुपहृत्यादृश्यतया स्वमुपसीदते नभस्वद्रूपायाऽन्तेसदे शिष्याय वेगरहस्यविशेषानिव मन्दं मन्दमुपदिशन्तम्, अविश्रान्तं चलिता याः खुरपङ्क्तयस्ताभिः कन्दलितः समुत्थापितो यो धूलिरङ्गस्तेन सङ्कुचिताः, अत एव समीपसंगततया, 'प्रहृता एव भवामो वयं भवतो गतागतैरितः-परमकस्मान्निर्हेतुकमस्मान्प्रति धाटीवेगस्य रणयात्रागतिरंहसः समाटीकनैः

अनुनीयमानम्, अस्मदाशामित्र-सपत्र-गोत्राधर-परित्राण-पारीणः समुद्र एष द्रुतगतिभावोन्मुद्र-पांसूद्रेकैर्निश्शेषीकृत्य भवता विद्राव्य एवेति प्रार्थनाय खुर-पुट-मूर्त्तिमर्जितवता वज्रेणेव गाढगृहीतचरणाञ्चलम्,

व्यञ्जित-कायमिव प्रभञ्जनम्, मानिताकार-गुरु-विलासमिव मानसम्, स्थल-गमन-वाञ्छा-कलित-मही-सञ्चारमिव कञ्जेश-हयम्, परोहित-पक्ष-त्रेषमिव तार्क्ष्यम्, वपुष्मन्तमिव गर्वोष्माणम्, वेगमिव तुरगवेषम्, साहसमिव देहसंगतम्, सलिल-प्रवाहमिव सततचटुलशफराजिविराजितम्, सन्नृपसभामध्यमिव सततमुखरचितकविकान्तम्, वसन्तमिव वर्धितबाल-

---

संक्षोभभयस्य परिपाटीर्न प्रकटीकुरु' इति वदन्तीभिरिव दिग्भिः सर्वदागत्य परिरभ्यानुनीयमानम्। अस्माकमाशायाः पूर्वस्या दिशः ( वस्तुतो दिक्पतेरिन्द्रस्य ) अमित्राणि ये सपत्राः सपक्षा गोत्राधरास्तेषां परित्राणे पारीणः समुद्र एष द्रुतगतितयोन्मुद्रैः समुत्थितैः पांसूद्रेकैर्निःशेषीकृत्य प्रपूर्य भवता विद्राव्य एव स्थलतामिव नेय इति प्रार्थनाय खुरपुटमूर्त्तिमर्जितवता गृहीतवता वज्रेण गाढगृहीतचरणाञ्चलमिव स्थितम्। तस्य हयस्य खुरा वज्रकल्पाः कठोरा अभूवन्निति भावः। अस्मदाशा भर्त्रमित्रेति वा पाठः।

व्यञ्जितेति। व्यञ्जितकायं देहवन्तं प्रभञ्जनमिव, मानितो गृहीत आकारस्य गुरुर्विलासो येन तादृशं मानसमन्तःकरणमिव, पृथ्वीविहाराकाङ्क्षिणं कञ्जानि पङ्कजानि तेषामीशः सूर्यस्तस्य हयमिव, परोक्षितस्तिरोहितः पक्षिवेषो येन तं तार्क्ष्यमिव, वपुष्मन्तं गर्वोष्माणमिव, तुरगवेषधारिणं वेगमिव, देहसंगतं साहसमिव स्थितम्। सलिलेति। हयपक्षे-शफानां खुराणां राजिः, प्रवाहपक्षे-शफराणां मत्स्यानामाजिर्युद्धम्। चटुलं चपलम्। सन्नृपसभेति। सभापक्षे-मुखे प्रधानस्थाने रचितैः यथोचितं संनिवेशितैः कविभिः कान्तम्,

पल्लवम्, वारिराशिमिव प्रकाशितदेवमणिम्, अरण्यानीभागमिव अदृष्टान्तपल्ल्ययनवरत्रासिताङ्गिनम्, धार्मिकमिव धारालसंक्रमम्, नैगममिव नवनवभाण्डकारिणम्, राघवानीकमिव सुग्रीवमुखम्, मायागजरणाङ्गणमिव महारभ्यरंसितकाठिन्यम्, स्फुरितखलीनमपि भुवि विलसन्तम्, केसरिणमपि धृतहरिणराजिकाननम्, विनीतमपि विरचित-

---

हयपक्षे-मुखे रचितः स्थापितः कविकाया अन्तः प्रान्तो यस्य तादृशम् वसन्तेति। वसन्तपक्षे-बालपल्लवाः किसलयाः; हयपक्षे-पल्लवनं पल्लवो विस्तारः, बालस्य बालधेः पुच्छस्य विस्तारो बालपल्लवः। "बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ—" इति मेदिनी। वारिराशिमिव। वारिराशिपक्षे-देवमणिः कौस्तुभः; हयपक्षे-देवमणिः (' आवर्त्तो रोमजो देवमणिस्त्वेष निगालजः ' 'निगालस्तु गलोद्देशे', इति च वैजयन्ती)। अरण्यानीभागमिव। वनभागपक्षे-अदृष्टः अन्तो यस्य तादृशम्, किञ्च पल्ली भिल्लग्रामः अयनं येषां तेषु वराः श्रेष्ठा ये किरातप्रभृतयस्तैस्त्रासिता अङ्गिनो देहिनो यत्र तादृशं च; हयपक्षे-अदृष्टान्ता गाढबद्धत्वाददृश्यप्रान्ता या पल्ल्ययनस्य पर्याणस्य वस्त्ररज्जुस्तयासितं बद्धं यदङ्गं तद्वन्तम्। धार्मिकमिव। धार्मिकपक्षे-धारालो गङ्गादिधारायाः स्नानादिना ग्रहणपरः संक्रमो मेषादिराशिषु भान्वादिसंचारो यस्य तम्। अन्यत्र धारा अश्वस्य गतिविशेषः। नैगममिव वणिजमिव। वणिक्पक्षे-भाण्डं मूलधनम्, हयपक्षे-भाण्डमश्वभूषा। राघवानीकमिव। अनीकपक्षे-मुखः प्रमुखः। हयपक्षे-शोभना ग्रीवा मुखं च यस्य तम्। स्फुरितं खेलीनं लयो यस्य तादृशमपि भुवि लसन्तमिति, विरोधपरिहारस्तु खलीनं कविका। केसरिणमपि। सिंहमपि हरिणरक्षकमिति विरोधः, केसरिणं सटालमपीति विरोधपरिहारः। धृताः स्थिताः हरिणराजिकाः पाण्डुधाराः (' हरिणः पाण्डुरः पाण्डु' रित्यमरः ) यत्र तादृशमाननं यस्य तादृशमित्यर्थः। एतेनाश्वस्य देहवर्णः पाटलोऽभूदिति ध्वनितम्। विनीतमपि विरचितशैशवचापलमिति विरोधः,

बालचापलम्, अनुकलाकलितफूत्कृतिमप्यध्वनिधीरं महान्तमश्ववर्यमपश्यत् ।

सविधोपगतेन सादिना धुतबालव्यजनेन लालितम् ।
हयरत्नमयं विलोकयन्नवनीभृद्विषमाममन्यत ॥ ७६ ॥

अनन्तरमन्तिकमानीतमवनीपतिराभाषमाणमिव हेषारवैर्जयजीवघोषम्, नमुचिशासन इवोच्चैःश्रवसम्, नभोगमेशमिव केशवः, समारोहद्वाहवरम् । अधिरुह्य निर्गच्छन्नात्मसङ्काश-वयोऽलङ्कारैः, अवनीपति-कुमारकैः अनुषक्त-तुरङ्गमारूढैरनुगम्यमानः, निर्गमावलोकनैकाग्र-मानसाम्, निटिल-तट-घटिताञ्जलि-पुटाम्, उभय-पार्श्व-निषण्णाम्, सामन्त-वसुन्धरा-पालक-मण्डलीम्, औपयिकालापावलोकनादिक्रमैरनुगृह्णन्, अपरिमित-करि-तुरग-पादात-तुरङ्ग-संकुलतया

---

विरचितं बालस्य बालधेश्चापलं येनेति तत्परिहारः । अनुकलमनुक्षणमाकलिता फूत्कृतिर्येन तादृशमपि अध्वनिना निःशब्दतया धीरं गम्भीरमिति विरोधः, अध्वनि मार्गे इति परिहारः । एतादृशं महान्तमश्ववर्यमपश्यत् ।

**सविधे**ति । धुतबालव्यजनेन सविधोपगतेन सादिना लालितं हयरत्नं विलोकयन् अयमच्युतदेवोऽवनीभृद्विषमां भरन्तीतिभृतः सान्निध्यादवनीभृतः पर्वतास्तैर्विषमाममन्यत । प्रयातुमस्माकमियं कियत्पदं धरेति विचिन्त्य धरणीधरा अपि समतलतामाप्नुवीरन्निति विचिन्तयामास । वियोगिनीसुन्दरीत्यपरपर्यायद्वयं वैतालीयं छन्दः "विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनीति तल्लक्षणात् ॥ ७६ ॥

**अनन्तरमि**ति । नभोगमेशो विहगेशो गरुड इति । निटिलतटे ललाटभागे घटितो रचितोऽञ्जलिपुटो यया ताम्, औपयिकं न्याय्यं यथोचित-

हस्तिनखान्मन्दं मन्दं विनिर्गत्य नृपतिरगाहत बाह्याली-विहार-महीम् ।

अवगाह्य महीपतिरौपवाह्यमधिरुह्य वसन्नेवाभ्यर्णचराणा-मनर्गल-वल्गा-विभाग-चमत्काराणाम्, अभितः प्रचलित-चरी प्रचारी-चमर-धाराटानाम्, अवनीपति-कुमाराणाम् आटोपान् अवलोकयन् दर-स्मित-विकसित-दृष्टिरतिष्ठत् ।

कशात्रयविशारदाः कतिचिदश्ववारा हयान्
मुहुर्मुरलभकम्पिकामुखगतिभ्रमीविभ्रमैः ।

---

मित्यर्थः । हस्तिनखात्पुरद्वारेऽवतरणार्थं कृतात्क्रमनिम्नान्मृत्कूटादित्यर्थः । बाह्याली बाह्यसेतुस्तत्रत्यां विहारमहीम् । शिष्टं स्पष्टम् ।

**अवगाह्ये**ति । तत्र च महीपतिरवगाह्य स्नात्वा औपवाह्यमश्वमधिरुह्य वसन्नेव विष्ठन्नेवाभ्यर्णचराणामनर्गलं वल्गाया विभागः परित्यागस्तस्य चमत्कारो येषां तेषाम्, अभितः प्रचालिता चरीप्रचरीचमरधराटा अश्वगतिभेदा यैस्तेषामवनिपतिकुमाराणामाटोपान् अवलोकयन् दरमीषत्स्मितविकसित-दृष्टिरतिष्ठत् । यद्वा चर्यौ वाद्यविशेषाः, एवमेव प्रचर्यपि, चामरयुक्ताः धाराटाः हस्तिनः एभिः संकुले स्थले इति यावत् ।

**कशे**ति । कशा ताडनी "अश्वादेस्ताडनी कशे" त्यमरः । अत्र कशाः कशाघातास्तासां त्रयमुत्तममध्यमाधमस्थानेषु यथासंख्यं मृदुमध्यनिष्ठुर-सकृद्द्वित्रिरूपेण त्रयं तत्र विशारदाः, यथाह भोजः—

मृदुनैकेन घातेन दण्डकालेषु ताडयेत् ।
तीक्ष्णं मध्यं पुनर्द्वाभ्यां जघन्यं निष्ठुरैस्त्रिभिः ॥
उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते ।
बडवालोकनोत्सुक्ये बहुगर्वितहेषिते ॥
संत्रासे च दुरुत्थाने विमार्गगमने भये ।
भिक्षात्यागस्य समये संजाते चित्तविभ्रमे ॥

उदस्तमुखमुल्लसत्खुरमुदीर्णकर्णद्वयं
सकौशलमचालयन् सह विलोकिनां मौलिभिः ॥८०॥

पार्ष्णिद्वयाञ्चलहतिप्रकटोरुवेगान्
सिद्धान्मुखे जयतुरङ्गवरान् परेचित् ।
नानागतैर्नवसु वीथिषु चालयन्तः
शिष्या इवाभ्यधुरमुष्य पुरः स्वशिक्षाम् ॥ ८१ ॥

केवलस्यदगतीन् यवनादीन् ह्रेपयन्त इव भूपकुमाराः ।

---

दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि
ग्रीवायां भीतमाहन्यात् त्रस्तञ्चैव च वाजिनम् ।
विभ्रान्तचित्तमधरे त्यक्तशिक्षं च ताडयेत्,
प्रहरेच्च स्कन्धबाह्वोर्बडवालोकिनं तथा ।
उपवेशे च निद्रायां कटिदेशे च ताडयेत् ।
दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा ।
जघने स्खलितं हन्यान्नेत्रमार्मे दुरुत्थितम् ।
यः कुण्ठप्रकृतिर्वाजी तं सर्वत्रैव ताडयेत् ॥ इति ।

कतिचिदश्ववारा हयान्मुहुर्मुरलाभम्पिकादिभिर्मुखगतिभ्रमीभिः प्रमुखगतिप्रचारैरुदस्तमुखमुल्लसत्खुरमुदीर्णकर्णद्वयं सकौशलं यथा स्यात्तथा विलोकिनां मौलिभिः सहाचालयन् । पृथ्वी छन्दः ॥ ८० ॥

**पार्ष्णिद्वयेति** । पार्ष्णिद्वयाञ्चलस्य ( एड़ीतिप्रसिद्धस्य ) पादप्रान्तभागस्य हतिराघातस्तेन प्रकटोरुवेगान् सिद्धान् शिक्षितान् जयतुरङ्गवरान् परेचित्केचिदित्यर्थः । परशब्दाच्चित्प्रयोगोऽत्रैव दृश्यते । नानागतैर्नवसु वीथिषु गतिततिषु चालयन्तः शिष्या इवामुष्य पुरः स्वशिक्षामभ्यधुः प्राचीकटन्निति । वसन्ततिलकं वृत्तम् ॥ ८१ ॥

**केवलेति** । केवले स्यदे वेगे गतिर्येषां तान् यवनादीन् पारसीकवाल्हीक-

भञ्जलीझलपिकागतिलीलाभङ्गिभिर्व्यचलयन्त तुरङ्गान् ॥८२॥

इति दर्शिताश्वगतिविभ्रमानिमान्
अभितोष्य तत्तदनुरूपभाषितैः ।
हयमन्यमन्यमधिरुह्य लीलया
विविधैर्गतैर्विहरति स्म भूपतिः ॥ ८३ ॥

अनन्तरमास्कन्दित-धौरितक-रेचित-वल्गित-प्लुताभिधान-समञ्चित-धारा-पञ्चक-प्रपञ्चक-संचरणेन चिरं विहृत्य सकौशलमुपरि कशाञ्चलेन प्रहृत्य कन्दुकमिव निपतन्तमेव वसुन्धरायामन्तरिक्षकक्षासु सत्वरमतिदूरमभिनर्तयन् समक्ष-मुत्क्षिप्य कुन्तमन्तरा सलीलमन्हाय गृह्णतः स्वकर-सत्वर-विमुक्त-पत्रि-विनिपतनात् पुरस्तादेव सरघाधिष्ठित-सम-मुख-दष्ट-भूतलेन रयोत्तानितावर्त्तन-निवर्त्तनक्रमानिर्धार-पराभिपतना-

---

देशोद्भवान् अश्वान् हेपयन्त इव भूपकुमाराः भञ्जलीझलपिकागतिलीला-भङ्गिभिस्तुरङ्गान् व्यचलयन्त । स्वागता वृत्तम् ॥ ८२ ॥

इतीति । इतीत्थं दर्शिताश्वगतिविभ्रमानिमान् तत्तदनुरूपभाषितैरभि-तोष्यान्यमन्यं नवं नवं हयमधिरुह्य लीलया विविधैर्गतैर्भूपतिर्विहरति स्म । सुनन्दिनीत्यपरपर्यायं मञ्जुभाषिणी छन्दः—"सजसा जगौ भवति मञ्जु-भाषिणी"ति लक्षणात् ॥८३॥

अनन्तरमिति । आस्कन्दितधौरितकादयो धाराभेदाः । समञ्चितं पूजितम् । कशाञ्चलं कशाप्रान्तदेशस्तेन । प्रहृत्य । अन्तरिक्षकक्षासु अन्तरिक्षमार्गेषु कुन्तं समक्षमुत्क्षिप्योपरि क्षिप्त्वाऽन्तरा मध्य एव स्वकरविमुक्तस्य पत्रिणो बाणस्य विनिपतनात्पूर्वमेव सरघाधिष्ठितं समं, सरघा यथा क्वचिन्झटिति तिष्ठन्ति तद्वत्, मुखेन ( अश्वेन स्वमुखेन ) दष्टं भूतलं येन तेन, बाणेन कुन्तवेधः घोटकेन तद्भूमिग्रहश्च सर्वं सममेव जातमलक्ष्यतेत्यर्थः । रयेणोत्तानितमुत्ता-

भिपतन-भूमि-मुख-गति-निरर्गल-चमत्कारेण, निष्कलङ्क-निजाङ्ग-मालिन्य-शङ्कयेव चटुलतर-निजाङ्घ्रि-भव-धूलि-संगममपि परिहरता, नियतानुगच्छदात्मच्छाया-तुरङ्ग-लिलङ्घयिषा, रोषादिव साटोपमभितस्त्वङ्गता-मनोविलसितानुकूल-गति-हृदयङ्गमेन तुरङ्गमेण नल-नकुल-रेवन्त-चातुरीमधिकृत्य चारीप्रचारीः सुचिरमचीकरत् ।

छत्रच्छायातले शस्तं चारयन् सकलं जगत् ।
अचारयदिह क्ष्मापो हयमित्यद्भुतं कुतः ॥ ८४ ॥

तदनु धरणिपालास्तद्विचित्राश्वचर्या-
विलसितमनवद्यं वीक्ष्य विस्मेरचित्ताः ।
चिरमिव मणिभूषावस्त्रनीराजनाभिः
सह भुवमिव गर्वं सर्वविद्यास्वमुञ्चन् ॥ ८५ ॥

वसुनाभरणैर्वसुन्धरेन्द्रा नृपमेनं निरराजयन्प्रमोदात् ।

---

नितमुखं वर्तनं स्थितिः, निवर्त्तनं प्रत्यावृत्तिः, आवर्तनं भ्रमणं तेषां क्रमा-निर्धारणेन परापतनेऽभिपतने भूमिं प्रति मुखेन गतौ च निरर्गलो गति-चमत्कारो यस्य तेन । त्वङ्गता वल्गता । नलनकुलरेवन्ता अश्वशास्त्रविशा-रदाः । चारीप्रचारीरश्वगतिविशेषान् । स्पष्टमन्यत् ।

छत्रेति । छत्रच्छायातले शस्तं यथा स्यात्तथा सकलं जगच्चारयन् क्ष्मापो भूपोऽच्युतदेवो हयमचारयदित्यद्भुतमाश्चर्यं कुतः स्यान्न कुतोऽपीतिभावः । अनुष्टुब् वृत्तम् ॥ ८४ ॥

तदन्विति । तदनन्तरं धरणिपालास्तद्विचित्राश्वचर्याविलसितमनवद्यं वीक्ष्य विस्मेरचित्ताः सन्तो मणिभूषावस्त्रनीराजनाभिः सह चिरमिव चिरादेव विमुक्तां भुवमिव सर्वविद्यासु गर्वममुञ्चँस्तत्यजुः । मालिनी वृत्तम् ॥८५॥

हयचक्रगतैर्निजैरयं प्रागपि नीराजित इत्यबुद्धमेतैः ॥८६॥

इति विचित्रतर-विविध-गति-क्रमैश्चित्तमिव जगतां नर्त्तयित्वा तुरङ्गममभङ्गुररसोत्तरङ्गितान्तरङ्गः क्षितिपतिरपाङ्गित-प्रेङ्खित-व्यथितासंख्यात-भूजानि-नीराजितालङ्कार-दुकूलाधिक-शृङ्गारित-मागध-संघ-संघुष्यमाण विशंकट-विरुद-गाथा-प्रसङ्ग-विशृङ्खल-मङ्गल-शङ्ख-मृदङ्ग-निनद-तरङ्गित-दशादिगङ्गणः पुरीमभिप्रहृष्टचेताः प्रातिष्ठत ।

अत्रान्तरे वसुन्धरापतेरन्तिकचरो बन्दिगणः समन्ततो बहुविधोपश्लोकपुरस्सरं तस्य चराचरश्लोकपरिपाटीमपाठीत् ।

आरोढुमच्युतमहीन्द्र ! हयं गजं च
धीरो भवानिव न कश्चिदिति क चित्रम् ।

---

**वसुनेति**। वसुन्धरेन्द्रा एनं नृपं वसुना धनेनाऽऽभरणैश्च प्रमोदात् नीराजनयाऽलमकार्षुः । अयं हयचक्रगतैः प्रागपि नीराजित इत्येतैरबुद्धमनवगतमिति । औपच्छन्दसिकं छन्दः । तदुक्तं "पर्यन्तेर्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तमिति ॥ ८६ ॥

**इतीति**। इत्थं जगतां चेत इव तुरङ्गमं नर्तयित्वा क्षितिपतिः अपाङ्गित-प्रेङ्खितेन व्यथितैरसंख्यातैर्भूजानिभिर्नीराजितैरलङ्कारैर्दुकूलैश्चाधिकं शृङ्गारितैर्मागधसंघैः संघुष्यमाणविपुलविरुदगाथाप्रसङ्गेन विशृङ्खलानां मङ्गलशंखमृदङ्गानां निनदैस्तरङ्गितदशदिगङ्गणः प्रहृष्टचेताः सन् पुरीं प्रातिष्ठत ।

**अत्रान्तर** इति । स्पष्टम् । अत्रान्तरे बन्दिगणस्तस्य श्लोकस्य यशसः परिपाटीं धोरणीमगायत् ।

**आरोढुमिति**। हे अच्युतमहीन्द्र! हे अच्युतदेव महीपाल ! हयं गजं चारोढुं भवानिव कश्चिदपि नेति क चित्रम् । यतस्तवाज्ञाऽश्वपतिगजपत्योः (जात्येक-

आक्रम्य मौलितलमश्वगजाधिपत्यो-
राज्ञा तव प्रसभमाक्रमते समन्तात् ॥ ८७ ॥

भूपत्वादमुमच्युतक्षितिपतिं दिक्पालकांशं परं
नो जानन्तु पुरन्दरस्तदधिकश्चिच्छेद वज्राद्रिरीन् ।
तत्सारं गिरिशृङ्गसन्निभमयस्तम्भं तु रम्भासमं
खड्गेनैव लुनाति तद् ध्रुवमयं पूर्णावतारो हरेः ॥८८॥

स्वामिन्नच्युतराय! तावकरिपुक्ष्मापालनीलालकाः
सद्यः कण्टकपूरिताङ्गलतिकाः सस्वेदकम्पोदयाः ।
आश्रित्याप्यरतिं विलोलनयनव्यक्तीभवद्विभ्रमा
लीयन्ते विपिनान्तकुञ्जकुहरे व्याकीर्णकेशाम्बराः ॥८९॥

खड्गे प्रकम्पिते कम्पा धनुष्यानमिते नताः ।

---

वचनम् ) मौलितलमाक्रम्य समन्तात्प्रसभमाक्रमते प्रसरतीति । वसन्त-तिलकं वृत्तम् ॥ ८७ ॥

**भूपत्वा**दिति । अमुमच्युतक्षितिपतिं परं केवलं दिक्पालकांशं नो जानन्तु यतस्तेषां मध्येऽधिकः पुरन्दरो वज्रात्केवलं गिरीन्, ( तत्पक्षान् ) चिच्छेद । परमयं अश्मसारस्तम्भं रम्भया समं खड्गेनैव लुनाति, तस्मादयं ध्रुवं हरेर्विष्णोः पूर्णावतारः । शार्दूलविक्रीडितं छन्दः ॥ ८८ ॥

**स्वामिन्नि**ति । हे अच्युतरायस्वामिन् तावकरिपुक्ष्मापालनीलालकास्तव शात्रवभूपसुकेश्यः अरतिं वनवासदुःखमाश्रित्यासाद्यापि विलोलैर्नयनैर्व्यक्तीभवन् विभ्रमो विलासो यासां तादृश्यः सद्यःकण्टकैः पुलकैः (वस्तुतस्तु प्रसिद्धैः कण्टकैरेव) पूरिताङ्गलतिकाः, सस्वेदं कम्पोदयो यासां तादृश्यः व्याकीर्णकेशाम्बराश्च सत्यः, विपिनप्रान्तवर्तिनि कुञ्जे लीयन्ते । शार्दूलविक्रीडितम् ॥ ८९ ॥

**खड्ग** इति । हे अच्युतेन्द्र, तवारयः, किं नु तव खड्गधनुषोर्ध्यानाद्यत्तादात्म्यं तद्रूपताप्राप्तिस्तया निमित्तभूतया त्वया खड्गे प्रकम्पिते कम्पन्ते इति कम्पाः,

किन्तु ध्यानात्तु तादात्म्यादच्युतेन्द्र तवारयः ॥ ६० ॥

वितरसि फणिलोकं विद्रुतानां नृपाणा-
मरमरभुवनलक्ष्मीमाहवे सम्मुखानाम् ।
अपि च पदनतानामाधिपत्यं जगत्याः
किमिति वितरणं ते कीर्त्तयाम्यच्युतेन्द्र ! ॥६१॥

अच्युतक्षोणीपालस्य कीर्तिदुग्धपयोनिधौ ।
ज्योतिश्चक्रं दिवि भ्राम्यद्दधात्यावर्त्तविभ्रमम् ॥ ६२ ॥

सरसि विहरसि त्वं शात्रवा वार्धिमध्ये
त्वमुपवनसरण्यां तेऽतिघोरे वनान्ते ।
कृतकगिरितटे त्वं किञ्च ते विन्ध्यशैले
कथमरिषु विगानं कथ्यतामच्युतेन्द्र ॥ ६३ ॥

---

कम्पमाना इति यावत्, जायन्ते, धनुष्यानमिते तु नता भवन्ति अन्यथैकत्र कृते व्यापारे कथमितरत्र फलं जायेतेति हेतूत्प्रेक्षा ॥ ६० ॥

**वितरसी**ति । आहवे विद्रुतानां नृपाणां कृते फणिलोकं पातालं वितरसि, क्वचिद्गिर्यादिगुहायां पाताले वा निलीयावस्थानात् । एवमाहवे सम्मुखानां साम्मुख्येन स्वौजोनतिरेकोद्धतानां कृतेऽमरभुवनलक्ष्मीं दिव्यवपुष्ट्वं वितरसि । पदनतानां कृते जगत्याधिपत्यं वितरसि,इत्थं ते वितरणं किमिति कथमिव कीर्त्तयामि । भुवनत्रयव्यापित्वेन निर्वचनीयत्वात्त्वद्वितरणस्येति भावः । मालिनी वृत्तम् ॥ ६१ ॥

**अच्युते**ति । अच्युतक्षोणीपालस्य कीर्तिदुग्धपयोनिधिरूपायां दिवि भ्राम्यज्ज्योतिश्चक्रमावर्त्तविभ्रमं दधाति । अनुष्टुब् वृत्तम् ॥ ६२ ॥

**सरसी**ति हे अच्युतेन्द्र ! त्वं तु सरस्येव विहरसि तव शात्रवा वार्धिमध्ये विहरन्ति । त्वमुपवनसरण्यां विहरसि तेऽति घोरे वनान्ते विहरन्ति । कृतकगिरेस्तटे त्वं विहरसि, ते विन्ध्यशैलमध्ये विहरन्ति । एवं

प्रत्यपद्यत नियताविरमदखिलपूर्वऋतुगणास्थानमभिनवसौरभ-
विरचितोद्यानमुद्यानम् ।

अनुक्षणं क्षोणिभुजो भुजो यदस्पन्दतारामपदोन्मुखस्य ।
सूक्तं शुभोदर्कममुष्य लोलमूर्ध्ना किमश्लाघि भुवांसभाजा ६७

शुभ-निमित्त-सूचित-कुशलाशंसः क्षितिरमण-कुलोत्तंसः स्रंसमान-प्रसून-केसर-विसर-विरचितासनेन, विकस्वर-कोरक-भृङ्गारक-मुख-निष्यन्दि-मकरन्द-रस-धारा-संपाद्यमान-पाद्येन, भृङ्ग-कुल-झङ्कार-तरङ्गित-सङ्गीत-प्रसङ्गेन, पुरस्तादवस्थापित-फल-जालेन महीरुह-गृहमेधि-समूहेन, अजस्र-वरिवस्यमाना-भ्यागत-शुक-मुख-द्विज-समाजम्, मन्द-गन्धवहोत्क्षिप्त-मञ्जरी-मणिकलश-विकीर्यमाण-माध्वीक-शीकर-सेकातिशीतलीकृतम्,

---

श्चक्रे। अत्रान्तरे प्रधानसचिवः सर्वं सम्पन्नमित्युक्त्वा स्वारचिते स्थानीयो-द्यानेऽनयत तं भूपम्। आकलितः विहितः। निदानं मूलकारणम्। क्रियतां मा वा मया तु भवदाज्ञैवान्वष्ठायि। नियतं नियमेन न विरमन्तोऽखिलाः पूर्वे ये ऋतुगणास्तेषामास्थानमेकायतनम्। शिष्टं स्पष्टम्।

**अनुक्षणमि**ति। क्षोणिभुजो भुजो बाहुरनुक्षणं यदारामपदमुद्यानस्थानं प्रत्युन्मुखस्यैव सतोऽस्पन्दत तत्किमंसभाजा भुवा लोलमूर्ध्ना सता बन्दिभिरुक्तं सूक्तं शुभोदर्कमित्यश्लाघि प्राशंसि। भुजशिरसि स्थिता धरण्यनुमुमोदेव चारणोच्चरितमिति भावः। उपेन्द्रवज्रा वृत्तम्॥ ६७॥

**शुभे**ति। विकस्वराः कोरकाः कलिका एव भृङ्गारकाः शीतलजल-पात्राणि तन्मुखैस्तदग्रभागैर्निष्यन्दमानमकरन्दरसधारासम्पाद्यमानपाद्येन भृङ्ग-झङ्कारितैः कृतसङ्गीतकेन, पुरोऽवस्थापितफलजालेन च, महीरुहा एव गृह-मेधिनो गृहिणस्तेषां समूहेन नित्यं पूज्यमाना अभ्यागताः ( समागताः अतिथयश्च) शुकमुखा वैयासकिप्रमुखा एव द्विजाः ( पक्षिणः ब्राह्मणाश्च )

उपरिविसृमर-कुसुम-रेणु-विसर-वितायमान-वितान-संविधानम्,

पाटल-प्रवालान्तर-विलम्बमान-मञ्जरी-पुञ्ज-व्यञ्जित-पट्टांशुक-गुच्छ-चामर-स्तोम-सामीचीन्यम्, सविलास-कासारम्, सुनासीर-मणिपात्र-विद्योतिचक्र-चक्राङ्ग-चञ्चरीक-पराग-पुण्डरीक-मण्डल-विस्पष्ट-चिपटीकृत-पट्ट-वसन-कौशेय-दुकूल-मृगमद-खण्ड-घनसार-हिम-समुद्गक-चमत्कृतम्, विविध-कुसुमापहार-वसन्त-सामन्त-शृङ्गारितम्,

शृङ्गार-राजोपकार्या-भवनाङ्गणमिव कमनीयम्, कोरक-कुचोत्सङ्ग-सङ्गत-पराग-रिंछोलिका-कञ्चुलिकाभिः, कोमलतम-कुहू-मुख-कूजित-विविध-गीति-विराजिताभिः, कूलंकषोन्मिषित-

---

तेषां समाजो यत्र तत्, मन्देन गन्धवहेनोत्क्षिप्ता मञ्जर्य एव मणिकलशास्तैर्विकीर्यमाणेन माध्वीकशीकरसेकेनातिशीतलीकृतम्, उपरिविसरणशीलेन कुसुमरेणुविसरेण तन्तन्यमानं वितानस्योल्लोचस्य संविधानं यत्र तत्।

**पाटलेति**। पाटलवर्णानां प्रवालानामन्तरे विलम्बमानेन मञ्जरीपुञ्जेन व्यञ्जितं पट्टांशुकगुच्छस्य चामरस्तोमस्य सामीचीन्यं यत्र तत्, मञ्जरीपुञ्जाः पट्टांशुकसाम्यं दधुरित्यर्थः। विलासाय निर्मितेन कासारेण सहितम् अत एव सुनासीरमणिरिन्द्रनीलमणिस्तस्य पात्रे विद्योतिभिश्चक्रैश्चक्रवाकैः श्चक्राङ्गैर्हंसैः चञ्चरीकैर्भ्रमरैः कमलनिचयैश्च विस्पष्टं यथा स्यात्तथा ( क्रमेण ) चिपिटीकृतेन पट्टवसनैः चीनांशुकैः कौशेयदुकूलैः मृगमदखण्डैः कस्तूरीखण्डैः, घनसारेण कर्पूरेण हिमसमुद्गकैस्तुहिनसम्पुटकैश्च चमत्कृतम्, वसन्त एव सामन्तस्तेन विरचितैर्विविधकुसुमोपहारैः शृङ्गारितम्।

**शृङ्गारेति**। शृङ्गार एव राजा तस्य भवनस्य प्रासादस्याङ्गणमिव कमनीयम्, कोरकमध्ये लग्ना परागस्य रिंछोलिका समुदायः सैव कञ्चुलिका कञ्चुकी यासां ताभिः, मुखं प्रभृत्यर्थे। कूलङ्कषोऽत्यधिकोऽत एवोन्मिषितो

मधुरसघर्म-जल-वर्मिताभिः, पारिप्लव-षट्पद-परम्परा-विलोकन भङ्गि-तरङ्गिताभिः, समुल्लसित-शाखा-वेल्लित-पल्लव-तल्लजतया समुल्लीढ-हल्लीसक-विलास-कोलाहलाभिः, वल्लिलासिकाभिः, उल्लासितमुद्यानमासाद्य प्राविशदमात्य-वर्य-निर्वर्तित-सार्वभौमोचित-सकलोपभोग-परिचर्यामुपकार्याम् ।

प्रविश्य तस्यां प्रमना विधाय महीपतिर्मज्जनभोजनादीन् ।
विदूषकारब्धविनोदवादः पश्यन् द्रुमान् पर्यटति स्म मन्दम्॥ ९८॥

स्पन्दमान-पवमान-कुमार-स्यन्दमान-मकरन्द-जलौघाः ।
आहरन् क्षितिरुहो नवधारा मण्डपा इव महीपतिचेतः॥ ९९॥

परिसरविकचस्थलाब्जवह्नौ
प्रसवरसाहुतिपातिनस्सकामम् ।
वनभुवि लतिकास्समुद्वहन्तो
बकुलवराः कुतुकं विभोरपुष्यन् ॥ १०० ॥

---

मधुरस एव घर्मजलं तेन वर्मिताभिः कवचिताभिः, चञ्चलमधुकरैरेव चञ्चलकटाक्षैर्युक्ताभिः, समुल्लसितासु शाखासु वेल्लितपल्लवतया समुल्लीढोऽङ्गीकृतो हल्लीसकविलासस्य नृत्यविशेषविधानस्य कोलाहलो याभिस्तादृशाभिः, वल्ल्य एव लासिका नर्त्तक्यस्ताभिरुल्लासितमुद्यानमासाद्य मन्त्रिसज्जीकृतसकलोपभोगसंविधानामुपकार्यां पटमण्डपं प्राविशत् ।

**प्रविश्येति**। तस्यामुपकार्यायां प्रविश्य प्रहृष्टमनाः संश्च महीपतिर्विदूषकेण समं कृतविनोदवाद उद्याने मन्दं पर्यटितुमारेभे। स्पष्टम्। उपजाति वृत्तम् ॥९८॥

**स्पन्दमानेति**। स्पन्दमानो यः पवमानकुमारो मन्दवायुस्तेन स्यन्दमानो मकरन्दजलौघो येभ्यस्ते, क्षितिरुहो वृक्षाः नवा धारामण्डपा इव महीपतेर्मनो जह्रुरित्यर्थः। स्वागता वृत्तम् ॥ ९९ ॥

**परिसरेति**। परिसरे विकचानि स्थलाब्जान्येव भूरक्ताम्भोजान्येव

तन्वाना मृदुचङ्क्रमान् वनलताधात्रीप्रवालाङ्गुली-

रालम्ब्य स्मयमानगुच्छनयनैरालोकितश्शाखिभिः ।

क्रीडत्षट्पदकिङ्किणीमुखरितं क्षिप्त्वा परागान् मुहु-

र्वल्गन्तः स्पृहणीयशैशवदशावातास्समानन्दयन्॥१०१॥

आराम-रामणीयक-दर्शन-समुत्सुक-हृदयम्, अवनीपति-मौपयिकालाप-रस-विशेष-परिपोषको विदूषकस्सविनोदमवादीत्—देव ! निधीयतामितोऽपि तावदनिमेष-तामरस-विपिनावलेप-विमोचनं लोचनम्—मञ्जुतर-मञ्जरी-लोचनाराञ्जित-कोकिल-कालिमाञ्जनः, महनीय-शाखा-भुजाञ्चल-व्यञ्जित-चञ्चरीक-वलय-मङ्गल-कङ्कणः, प्रत्यग्र-कुसुम-पराग-निर्वर्तित-पत्रोर्ण-परिधानः कर्णिकारः प्रवर्त्तयति सप्तच्छद-लता-समुद्वाह-समय-समुदाचारम् ।

---

वह्नयस्तस्मिन् प्रसवानां पुष्पाणां रसस्याहुतिं पातयन्तीति तच्छीलाः बकुलवराः, लतिकाः समुद्वहन्तो लतिका उदूहमानाः, विभोर्नृपस्य कुतुकं विनोदमपुष्यन् प्रावर्धयन् । पुष्पिताग्रा छन्दः ॥ १०० ॥

**तन्वाना** इति । वनलता एव धात्र्य उपमातृकास्तासां प्रवालाङ्गुलीरालम्ब्य मृदुचङ्क्रमान् कुर्वाणाः, स्मयमाना विकसिता गुच्छा एव नयनानि येषां तैः शाखिभिः ( पितृतुल्यैः ) विलोकिताः, भ्रमद्भ्रमरा एव किङ्किण्यः क्षुद्रघण्टिकास्ताभिर्मुखरितं यथा स्यात्तथा परागान् क्षिप्त्वा धूलिनिकरमुत्क्षिप्य वल्गन्तो धावमानाः, स्पृहणीया शैशवदशा येषां ते तादृशाः सन्तो वातपोताः राजानं समानन्दयन् । शार्दूलविक्रीडितं छन्दः ॥१०१॥

**आरामेति** । स्पष्टमन्यद् । विशेषस्तु औपयिकः युक्तः । मञ्जर्यैव लोचनं तत्र रञ्जितं कोकिलकालिमरूपमञ्जनं येन सः । गुञ्जन्मधुकराणां क्वणत्कङ्कणसाम्यम् । पत्रोर्णं धौतकौशेयम्, परागे वस्त्रत्वसमारोप इति ।

समीर-कुमार-समुदय-सामोदेन आरामसार्वभौमेन विभिन्नस्थल-पद-जातमखिलममलाद्द्विजसात्कृत्य विमुच्यन्ते वृन्तबन्धनात् कुसुमसन्ततयः ।

गुच्छस्तनारोपितचञ्चरीक-
कुमारजाग्रत्किसलाङ्गुलीभिः ।
लतावधूभिर्ललिता रसाला
गदन्ति रम्यं गृहमेधिधर्मम् ॥ १०२ ॥

एवमाभाषमाणं विदूषकं श्लाघयैव अलमिति निवार्य किमेते पुष्पन्धयाः पङ्क्तिशः प्राचीमेव दिशमभिधावन्ति, विचारयाम इति पुरतः पदानि कानिचिदचालीत् । गत्वा च प्रत्यग्र-शतपत्र-मधु-रसन-तृप्त-मराल-मत्तकाशिनी-मधुरिमोत्तेजित-कूजित-पुनरुक्तं कल-कल-स्वनितमश्रौषीत् ।

आकर्णयन्नेव, स्वरविशेषज्ञमानिना विदूषकेण 'बाल-

---

**समीरे**ति । बालसमीरसमुदितमुदितेनोद्यानसम्राजा विभिन्नस्थलरूप' मखिलं पदजातमधिकरणजातं द्विजा इव द्विजाः पक्षिणस्तदधीनं विधाय वृन्तबन्धनात्कारावासात्कुसुमसन्ततयो विमुच्यन्ते ।

**गुच्छे**ति । गुच्छा एव स्तनास्तेष्वारोपिताश्चञ्चरीका एव कुमारास्तेषु जाग्रन्ति किसलानि किसलयान्येव "पल्लवः किसले बले विटपे विस्तरेऽलक्त-रागे शृङ्गारषिङ्गयोः।" इति व्याडिः । अङ्गुल्यो याभिस्ताभिर्लतावधूभिर्ललिता रसाला आम्रवृक्षा रम्यं गृहमेधिधर्मं गदन्ति । उपेन्द्रवज्रा वृत्तम् ॥ १०२ ॥

**एव**मिति । मरालमत्तकाशिन्यः हंसिन्यः तासां मधुरिम्णोत्तेजितमतिमधुरं यत्कूजितं तस्य पुनरुक्तं प्रतिसादृश्यमिव भूतमिति ।

**आकर्णयन्नि**ति । स्वरे विशेषं जानामीति मन्यमानेन । अन्विता-

रसाल-वल्लरी-पल्लव-रसास्वादन-विकस्वर-मदभराकुलानां कोकिल-कुलानाम् अविकलः काकलीकलाप एव ’ इति परिच्छिद्य निगद्यमानोऽपि ‘अञ्चित-मणि-विपञ्चिका-गुणोदाञ्चित-स्वर-प्रपञ्च-वञ्चन-चुञ्चुः प्रकटिताक्षर-विन्यास-धन्यायितः कन्यका-जनानामन्योन्यालाप एव ’ इति निर्णीय पुरतो विचलन् भवान्यायतनमद्राक्षीत् ।

तमालिके ! समाकलय तमाल-तरु-कोमल-दल-मालिकाभिर्वन्दनमालिकाम् । माधविके ! माकन्द-धूलि-धूसरिताः शोधय शिरीष-केसर-पिच्छिकया काञ्चनवेदिकाः । कलापिके ! निरूपय कमलिकाकलितां कह्लार-पराग-रङ्गवल्लीम् । मञ्जरिके ! रञ्जय मणिदर्पणानञ्जसा कञ्ज-वन-रेणु-पुञ्जेन । अधिवासय वासरिके ! घनसार-रजसा केसर-कुसुम-रसान् । वल्लकीसंल्लापिनि ! कह्लार-मुकुल-नायक-विन्यसनेन समुल्लासय मल्लिका-कोरक-हार-वल्लीम् । लीलावति ! निशमय ममालापम्, बाला-शोकमुकुलमालायाः परिहर भसल-जाल-कोलाहलम् । कुत्राशय-

---

मनोहरा। विपञ्चिकायाश्चेदं विशेषणम् । विपञ्चिका वीणा ‘वीणा तु वल्लकी विपञ्ची’त्यमरः ‘ तेन वित्त ’ इत्यर्थे ‘ चुञ्चुप् प्रत्ययः स्वरप्रपञ्चवञ्चनेन प्रसिद्ध इत्यर्थः । धन्यायितः सुभगः । भवान्या देव्या गौर्या आयतनं मन्दिर-मद्राक्षीदिति । स्पष्टमन्यत् ।

**तमालिक** इति । शिरीषकेसरपिच्छिकया शिरीषकुसुममार्जन्येत्यर्थः । कह्लारस्य श्वेतसौगन्धिकस्य परागस्य रङ्गवल्ली मण्डनं ( ‘मांडना’ इति लोके ),कमलिकाभिर्बालकमलैः कलितां कृत्वा । निरूपय रचय । कह्लारस्य मुकुलमेव नायको मध्यमणिः । निशमय शृणु । उच्यमानं च सम्पादय

स्तव कुसुमवति ! चित्राणि वितनु शतपत्राभिनवबन्धनानि कोमलानि कुसुमदामानि इति परस्परमीरयन्तीनां सम्भ्रमानुरूपान् आलापान् आकर्णयन् अवनीपतिः, अभ्यर्णगतमत्युन्नत-प्राकार-वलय-निरूढ-परिसर परिवर्त्तमान-नवार्णोधर-विलसित-कर्णेजपैरनोकहजालकैरभिवीतम्, अत्युन्नत-बहिर्द्वार-गोपुरतया जगत्यामखिलमार्त्तजनमभिरक्षितुमिवोत्क्षिप्तमस्तकमुदीक्षमाणं, विचित्रम्, अतिपवित्रं, विविक्तम्, अभ्यपद्यत कात्यायनीभवनम् ।

तदनु धरणिपालो धावता चेतसाग्रे
सरभसमिव कृष्टः सद्म गौर्याः प्रविश्य ।
तडित इव घनौघे तत्र तत्र स्फुरन्तीः
परित इह पुरन्ध्रीः पर्यटन्तीरपश्यत् ॥१०३॥

अन्तरा तासामसाधारण-सहज-सौन्दर्याम्, असीमोदित-तरुणिम-चर्याम्, आर्यामिव स्वयमागृहीत-व्रत-चर्याम् ,अग्रतो नयन-वल्गनावसर-दर्शनैकाग्रमानसाभिरनुरूप-वेष-वयोधन्याभिः

---

कुत्राशयस्तव व्यस्तमना असि । चित्राणि वितनु विधेहि । अत्युन्नतो यः प्राकार-वलयस्तत्र निरूढानि, परिसरे परिवर्त्तमाना ये नवा अर्णोधरा मेघास्तेषां कर्णेजपानि सूचकानि तैस्तथाभूतैरनोकहानां जालकैरभिवीतमभितो व्याप्तम् । कात्यायनीभवनं गौरीमन्दिरमभ्यपद्यत । स्पष्टम् ।

**तदन्विति** । तदनु अग्रे धावता चेतसा सरभसं कृष्ट इव धरणिपालो गौरीमन्दिरं प्रविश्य तत्र बह्वीः स्त्रियोऽद्राक्षीत् । स्पष्टम् । मालिनी वृत्तम् ॥१०३॥

**अन्तरेति** । तरुणिमचर्या यौवनच्छटा । नयनवल्गनम् (राजकन्यायाः) भ्रूलताञ्चलक्षेपस्तदवसरदर्शने एकाग्रमानसाभिः, अञ्जलिना प्रसूनान्यादाय

अन्वास्यमानाम्, अञ्जलिनादाय प्रसूनानि निष्पन्दमाना-खिलाङ्गमवतिष्ठमानाम्, अपर्णाराधनाय धरण्याः स्वयमुत्तीर्णामिव निलिम्प-वर-नितम्बिनीम्, सभ्योदर-चापल-दोष-परिहार-कारणागतामिव सौदामनीम्, विषमशर-विजय-केतु-वैजयन्तीमिव विस्फुरन्तीम्, चक्षुरिन्द्रिय-संवनन-मन्त्रदेवता-मिव सन्निहिताम्, लावण्य-राज्यलक्ष्मीमिव अभिलक्षणीयाम्, शृङ्गार-सिन्धु-कन्दलितामिव सीमन्त-मयूख-रेखाम्, नीररुह-गृहमुख-वरारोहा-सर्ग-परिचय-निसर्ग-निष्णात-विधि-निर्माण-विद्यामिव निरवद्याम्, एकत्र पुञ्जीभूयसञ्चरन्तीमिवमदन-सञ्जीवन-कलाम्, अवर्णनीयलावण्याम्, अन्यादृशीं कामपि राजकन्यामनीनयद्दृक्सिरणीम्। निर्वर्ण्य सुचिरं स राजन्यो विस्मयविधेयतया नियन्त्रित इव, नियमित इव, निरभिज्ञ इव, निरर्गलरागाभियोगनिघ्न इव, निश्चलध्यानशील इव, निरवधि-कानन्दानुसन्धान इव, निरुद्धमनोवृत्तिः, निष्पन्दीभवदि-न्द्रियवैचक्ष्यो निर्निमेषवीक्षणः क्षणमतिष्ठत्।

---

निष्पन्दमानाखिलाङ्गं यथा स्यात्तथावतिष्ठमानाम्, अपर्णाराधनाय स्वयमुत्तीर्णामपर्णां पार्वतीमिव। सभायां द्यूते ('सभा सामाजिके गोष्ठ्यां द्यूते मन्दिरयोरपि' इति मेदिनी) साधुः सभ्यस्तस्य तेषां वोदरं वाचनिको रणः ('उदरं तुन्दरणयो'रिति हैमः ) तत्र चापलं चपलतैव दोषस्तस्य परिहाररूपेण कारणेनागतामुपगतां सौदामनीमिव। 'संवननं वशक्रिये'त्यमरः, तस्य मन्त्रस्तस्य देवतामिव हृदयहारिणीमित्यर्थः। शृङ्गारसिन्धौ कन्दलितामङ्कुरितां सीमन्तस्य मयूखशालिनीं रेखामिव स्थिताम्। नीररुहगृहा लक्ष्मीः सैव प्रमुखा यासां ताश्च ताः वरारोहास्तासां सर्गः सृष्टिस्तस्य परिचयोऽभ्यास-

स्थित्वाम्भोरुहशालिगर्भकदलीकाण्डेषु चक्राश्रिता-
प्यावर्त्तभ्रमितां वलम्ब्य गगनं प्रोत्तुङ्गशैलद्वयम् ।
आरुह्योज्ज्वलचन्द्रमण्डलसुधामासाद्य दृष्टिर्विभो-
र्ज्योत्स्नामध्यमुपागतापि पतिता नीलाम्बुवाहान्तरे १०४

अपि वीक्षितुं वपुरनीक्षितुं पुरः परिमोक्तुमक्षमतया क्षमापतेः।
भ्रमरीव नूतनपयोजवीथिकास्वतनिष्ट दृष्टिरसकृद् गतागतम् १०५

तदात्वे तमेनम् अनितर-सुलभानुभावार्चित-रमणीय-वेषम्, अनुसर्पणीय-सहज-प्रभावम्, अप्रमेयगाम्भीर्यमपि

---

स्तत्र निसर्गेण निष्णातो यो विधिस्तस्य निर्माणविद्यामिव । स्पष्टमन्यत् ।

**स्थित्वे**ति । अत्र श्लोके सर्वं वर्णनं निगीर्णरूपकेणेति प्राग् ध्येयम्—विभोर्दृष्टिर्नेत्रद्वयी अम्भोरुहाभ्यां कमलाभ्यां ( चरणाभ्यां ) शालेते तच्छीले ये गर्भकदल्यौ निस्त्वचौ कदलीस्तम्भौ (पाददण्डौ) तयोः काण्डेषु पर्वसु (गुल्फजान्वादिषु) स्थित्वा चक्रं नाभिचक्रम् आश्रिता आवर्तभ्रमिता-मपि वलम्ब्य ( भागुरिमतेनावोपसर्गस्याकारस्य लोपः । ) नाभीचक्ररूपे आवर्त्ते भ्रान्त्वाऽपि प्रोत्तुङ्गं शैलद्वयं स्तनद्वयमारुह्य,ततश्चोज्ज्वलस्य चन्द्रमण्डलस्य (मुखस्य) सुधामासाद्य 'आस्वाद्ये'ति वा पाठः । ज्योत्स्नामध्यं चन्द्रिका-प्रवाहमध्यं (मुखलावण्यम्) उपागतापि नीलाम्बुवाहानां नीलालकानामन्तरे पतिता बद्धा । शार्दूलविक्रीडितं छन्दः ॥ १०४ ॥

**अपी**ति । क्षमापतेर्दृष्टिः पुरःस्थितं वपुर्वीक्षितुम् अनीक्षितुं च । पुर इत्यस्य स्थाने पुनरिति पाठे पुनरनीक्षितुं चेत्यर्थः । किञ्च परिमोक्तुं सर्वथा शरीराद् दृष्टिं व्यावर्त्तयितुं वा अक्षमतमाऽत्यन्तमसमर्था नूतनपयोजवीथिकासु भ्रमरीवासकृद्गतागतमतनिष्ट चक्रे । "सजसा जगौ भवति मञ्जुभाषिणी" ॥१०५॥

**तदे**ति । अनुसर्पणीयम् अनुकरणीयम् । अविघ्नितनियमक्रमेतिच्छेदः

आविर्भवदनल्पदाक्षिण्यम्, मूर्धनि दृशोर्वसन्तमिव वसन्तम्, अनुग्रहमिव विग्रहवन्तम्, अवनीकान्तमवलोक्य, विजृम्भितसम्भ्रमाणां, किञ्चिदपसृत्य परस्परमुखार्पितमुखं किमप्यालपन्तीनां परिचारकसीमन्तिनीनाम् अविश्रान्त-कन्दलदाभरण-रणितानुबन्ध-तुमुलैरालाप-कोलाहलैरप्यविघ्नित-नियम-क्रमा, क्रमेण ध्यानावसान एव समुन्मीलितविलोचना तमभिवीक्ष्य, तत्क्षणाभिवृद्धसाध्वसा परिवृत्य चित्तमिव तस्य सविधमणिस्तम्भमवलम्बितवती।

स्तम्भान्तरितैव तरलतरान्तरङ्ग-तरङ्गयमाण-विस्मय-रसोर्मि-किर्मीरित-प्रेमभर-प्रेर्यमाण-चेतोभव-सरय-निखात-निशित-शर-व्रात-साधारणोदित-पुलकजात-किञ्जल्क-कञ्चुकिता प्रबलतर-कौतूहल-समुद्ध्रियमाण-धैर्य-पादप-संक्षोभेणेव कम्पमानगात्रलतिका, शम्बर-रिपु-मद-स्तम्बेरमावगाहन-रभसोत्कूलिताशय-राग-रसोदर-धाराल-स्वेद-पूर-मेदुरिता,

---

तं राजानम्। साध्वसं भयम्। शिष्टं स्पष्टम्।

**स्तम्भे**ति। तरलतरेणान्तरङ्गेण तरङ्गयमाणा ये विस्मयरसोर्मयस्तैः किर्मीरितो यः प्रेमभरस्तेन प्रेर्यमाणो यश्चेतोभवस्तेन सरयं सवेगं निखातो यः शरव्रातस्तत्साधारणं तत्सदृशमुदितं यत्पुलकजातं तदेव किञ्जल्कः केसरस्तेन कञ्चुकिता, प्रबलतरेण कौतूहलेन समुद्ध्रियमाणो यो धैर्यपादपस्तस्य संक्षोभेणेव कम्पमानगात्रलतिका। शम्बररिपुर्मदन एव मदस्तम्बेरमो मदकरी तस्य योऽवगाहनस्य रभसो वेगस्तेनोत्कूलितस्तटमुत्क्रम्य गत आशयरागश्चेतोरागः स एव रसो जलं तेनोदारो महान् धारालश्च यः स्वेदपूरः स्वेदप्रवाहस्तेन मेदुरिता (राजकन्या)।

मेदिनीपतेश्चेतो-रोहित-ग्रहण-दुर्दान्त-कुन्तल-भर-तमाल-वनान्तरित-लतान्त-शर-निरन्तर-वर्ष्यमाण-बाण-साधारणैः, तदीय-मनस्तामरस-सारस्य-जिज्ञासा-प्रहीयमाण-मधुकर-माणव-जाल-लालनीयैः, लोकातिशायि-रागाधिराज्याभिषेक-गङ्गा-यमुना-सलिल-तरङ्ग-सङ्काशैः, गाम्भीर्य-महाम्भोनिधान-प्रमाण-प्रसार्यमाणाखण्डल-मणिदण्डानुरागैः, सानुराग-हृद-यार्पण-तरल-विलोचनोत्पल-प्रसारित-बाहा-लता-विमोहावहैः, प्रेम-रस-सेकादि-वाल-सालसैः, समिद्धाभिलाष-भरानुसन्धा-नादिवातिमन्थरैः, तदाननारविन्द-सौन्दर्यातिशयाकृष्यमाणै-रिव संमुखीनतया वलमानैः, तारकान्तराल-प्रतिफलित-धरणीन्द्र-निर्गम-निरोधायेव मुकुलितैः, आलिङ्गद्भिरिव हर्षतरल-तया, आपिबद्भिरिव चिरमनिमेषतया, स्वयमाकारयद्भिरिव प्रकटतर-पक्ष्म-परिस्पन्दैः, अमन्द-कुतुक-परिभ्रान्तैः, आनन्द-परतन्त्रैः, अभिव्यज्यमानानुराग-रस-सान्द्रैः, अनेक-रस-संविधानैरवलोकनैः, कमलमयमिव, कह्लारमयमिव कैरव-

---

**मेदिनीपते** इति। राज्ञश्चेत एव रोहितो मृगस्तस्य ग्रहणाय दुर्दान्तानां कुन्तलानां भर एव तमालवनं तस्मिन्नन्तरितो यो लतान्तशरो मन्मथस्तेन निरन्तरं वर्ष्यमाणैर्बाणैः साधारणैः सदृशैः। रागस्य (राज्ञः) अधिराज्यायाभिषेकायाप-वर्जितानि यानि गङ्गादिसलिलानि तत्सदृशैः, अम्भोनिधानमम्भोधिः आखण्डल-मणय इन्द्रनीलमणयस्तन्निर्मितदण्डसदृशैः, विलोचनोत्पलप्रसारित-बाहुसङ्काशैः अलसालसैरत्यलसैः। प्रकारे द्विर्वचनम्। संमुखीनतया संमुखभावेन वलमानैश्चलद्भिः, तारकान्तरे कनीनिकायां प्रतिफलितो यो धरणीन्द्रो। राजा तस्य निर्गमस्य निरोधायेव मुकुलितैः। शिष्टं स्पष्टम्।

मयमिव, कौमुदीमयमिव, सौदामनीमयमिव, ककुबन्तरालमखिलं कलयन्ती, गाढतरं विलोकयन्ती, करणानामप्रभवन्ती कुसुमशर-परवशतामयासीत् ।

विलसदलसचारैर्विस्मयस्मेरतारैः
प्रणयरसगभीरैः प्रान्तविस्तारशारैः ।
वरतनुरवदातैर्वञ्चितासीत्सुशीतैः
प्रसवविशिखदूतैः पार्थिवस्याक्षिपातैः ॥१०६॥

पारिप्लव-परस्परावलोकित-परिमेलनानुपदमेव परास्त-प्रत्येकावस्थानाविव, व्यत्यस्तचित्राविव विनिमयितजीविताविव, परस्परानुप्रविष्टाविव, व्यत्यासंपृक्ताविव, परिहृतचैतन्याविव, विवर्जितनिखिलव्यापारौ विरहितविषयान्तरविवेकाविव, विस्मृतनिमेषौ विकस्वरविस्मयरसोन्मेषौ तावुभौ चिरमभूताम् ।

तदा बहिर्मण्डपचित्रवीक्षाविलम्बिनाभ्येत्य विदूषकेण ।
पाणिस्फुरत्पत्रिक एष मन्त्री प्रतीक्षते निर्गममित्यवादि ॥१०७॥

---

**विलसदि**ति । सा वरतनुः सुन्दरी विलसन्नलसो मन्थरश्चारः प्रचारो येषां तैः, प्रान्ते नेत्रप्रान्ते विस्तारेण शारैः कर्बुरितैः, सुशीतैरत्याह्लादकैः, प्रसवः पुष्पं तदेव विशिखं यस्य स कामदेवस्तस्य दूतैः, अक्षिपातैर्वञ्चिता विप्रलब्धासीदित्यर्थः । मालिनी वृत्तम् ॥१०६॥

**पारिप्लवे**ति । परिप्लवेन यत्परस्परमवलोकितं तस्य परिमेलनस्यानुपदमेव परास्तं प्रत्येकमन्योन्यमवस्थानं याभ्यां तौ विस्तृतस्वस्थितिकाविति यावत् । व्यत्यस्ते चित्रे अन्योन्यं याभ्यां तौ । स्पष्टमन्यत् ।

**तदे**ति । तदा तस्मिन् काले बहिर्मण्डपस्य चित्राणां वीक्षायां विलम्बिना विदूषकेणाभ्येत्य पाणौ स्फुरन्ती पत्रिका यस्य स तादृशो मन्त्री बहिर्निर्गमं प्रतीक्षते इत्येवमवादि । उपजातिवृत्तम् ॥१०७॥

विज्ञापनाममात्यस्य विदूषकनिवेदिताम् ।
सावधानमिवाकर्ण्य चलितुं समनीनहत् ॥ १०८ ॥

सन्नह्यन्नेव तदनन्तरं तत्र तत्र मणिभित्तिचित्रविनिर्वर्तितानि विचित्राणि चण्डिकाचरित्राणि तस्मै सविस्मयाय दर्शयन्निव, नवविलासरसोत्तरङ्गैरपाङ्गैस्तामेव प्रेमानुकूलां विलोकमानः, तया च सूचितनिजहृदयैक्यं विलोक्यमानः, सुचिरं विलम्ब्य माननीयं प्रधानवचनमिति तेन सह भाषमाणस्ततो विनिर्गत्य प्राग्द्वारवर्तिन्यास्तदीयधात्र्याः समीपे, तदशेषवृत्तान्तविविदिषया, विदूषकमभिप्रायवेदिनं विनिवेश्य, तत्तादृशीं तदङ्गसौन्दर्यलक्ष्मीमेव मुहुर्मुहुरुत्प्रेक्षमाणः, साकमनीकेन समासदत् सदनम् ।

आसाद्य मन्दिरमशेषनृपान् प्रहित्य
प्राग्द्वार एव सदृशप्रतिपत्तिपूर्वम् ।
अभ्यन्तरं नृपतिराविशति स्म सोऽयं
कन्दर्पकोऽपि विपुलो हृदयं तदीयम् ॥ १०९ ॥

---

**विज्ञापनामिति**। राजा विदूषकनिवेदिताममात्यस्य विज्ञापनां सावधानमिवाकर्ण्य चलितुं समनीनहत् सन्नद्धवान् । अनुष्टुब् वृत्तम् ॥१०८॥

**सन्नह्यन्निति**। सन्नह्यन्नेव तदनन्तरं तत्र तत्र स्थाने स्थाने मणिभित्तिषु राजकन्या चित्रे विनिर्वर्तितानि सम्पादितान्युत्कीर्णानि चण्डिकाया अम्बिकायाश्चरित्राणि तस्मै सविस्मयाय दर्शयन्निव सदनं समासदत्। स्पष्टमन्यत् ।

**आसाद्येति** । नृपतिर्मन्दिरं गृहमासाद्याशेषनृपान् प्राग्द्वार एव प्रहित्य विसृज्याभ्यन्तरमन्तःपुरं विशति स्म । इतो विपुलः कन्दर्पकोऽपि महामन्मथोऽपि अत्र मूले " मामालकोऽपी"तिपाठोऽस्ति, यद्वा मायालवो-

नृपेन्दुरन्तःपुरकामिनीनां नीराजनामङ्गलमङ्गयकार्षीत् ।
सन्तः पराधीनहृदोऽपि सन्तः सदानुकूला हि समाश्रितेषु ११०

तत्र वृद्धपुरन्ध्रीणामाशीर्भिरभ्यर्हितो नृपतिर्गर्भगृहशयने निपत्य समुत्ताम्यता चित्तेन रहसि चिन्तयति स्म विस्मयनीयम अतिस्पृहणीयम् अनुपमेयम् अमेयम् अचिन्तनीयम् अनाख्येयम् अतिरमणीयं तदीयं रूपधेयम् ।

सहिष्णुतासंजनितैस्तपोभिः पयोधिकाञ्च्याः फलितं चिराय ।
तिरस्कृतश्रीविभवं यदस्यां स्त्रीरत्नमेतादृशमप्युदीतम् ॥१११॥

सौन्दर्यसारसमवायचमत्कृताङ्गय-
श्चन्द्राननाः कति न सन्ति वसुन्धरायाम् ।
नर्मस्मितांशमपि ता न भजन्त्यमुष्याः
काचिद्विधेरियमहो ! करकौशलश्रीः ॥११२॥

---

ऽपीतिपाठः, मायां लुनातीति मायालवः कामदेवस्तस्य शम्बराराातित्वात् । शाम्बर्याश्च मायात्वादिति मूले यथास्थितः पाठस्त्वलग्नत्वात्परिहृतस्तथापि चिन्त्यः । मा बालक, इति वा पाठः । तदीयं हृदयं विशति स्मेति । वसन्ततिलकं वृत्तम् ॥१०६॥

**नृपेन्दु**रिति । अन्तःपुरकामिनीनां नीराजनां नृपेन्दुरङ्गयकार्षीत् स्वीचकार । पराधीनचेतसोऽपि सन्तः सज्जनाः समाश्रितेषु सदा अनुकूला एव भवन्तीत्यर्थः । उपजातिच्छन्दः । शिष्टं स्पष्टम् ॥११०॥

**सहिष्णुते**ति । पयोधिकाञ्च्याः धरण्याः सहिष्णुतासंजनितैस्तपोभिश्चिराय चिरेण फलितम् । यत् तिरस्कृतश्रीविभवमेतादृशं स्त्रीरत्नमस्यां क्षमायामुदीतमुत्पन्नम् । उपजातिवृत्तम् ॥१११॥

**सौन्दर्ये**ति । सौन्दर्यस्य सारस्तस्य समवायः समुदयस्तेन चमत्कृतान्यङ्गानि यासां तास्तादृश्यश्चन्द्रमुख्यो वसुन्धरायां कति न सन्ति, अनेका

प्रशंसा हंसानां परिभवनमस्या मृदुगतैः
कटाक्षादाक्षेपः कमलवनलक्ष्म्याः परिपणः।
घनानामानन्दः कबीरनिकुरम्बादवमतिः
कुचद्वन्द्वान्निन्दा कुशलपरिपाकः कुलगिरेः ॥ ११३ ॥

प्रतिपदवितीर्णशतपर्णपल्लवजातयोः पादयोः पयसिरुह-किसलययोरुपमानमसमानम्, साधर्म्यकामनया सरसलतिकाञ्चलसूचिकाशिखासु समासादिततपसामिव किसलयानामुपरिविरचितपरिहासभङ्गीनामङ्गुलीनां सविलासहासरेखा एव नखरमयूखाः।

---

विराजन्ते, तथापि ताः सर्वा मिलित्वाप्यमुष्याः नर्मस्मितस्यांशं लीलाहसितस्य-लेशमपि न भजन्ति तस्मादहो इयं विधेः काचिदनुपमैव करकौशलश्रीः हस्तलाघवपरिणतिरिति। वसन्ततिलकं छन्दः ॥११२॥

**प्रशंसे**ति। अस्या मृदुगतैः परिभवनं हंसानां प्रशंसा, अस्याः कटाक्षात् कमलवनलक्ष्म्याः आक्षेपः परिपणो मूलधनम्, "नीवी परिपणो मूलधनमित्यमरः", कबरीणां निकुरम्बात्कदम्बाद्घनानामवमतिरवमानोऽप्यानन्द एव, एवमस्याः कुचद्वन्द्वात्कुलगिरेर्निन्दाऽपि कुशलपरिपाकः। इमे सर्वेऽपि तत्सादृश्याय स्पर्धमानास्तैस्तैरवमाननां भजन्तो "वयं कथंचित् तस्य प्रतिपक्षतां तु प्राप्ता" इत्येतावतैवात्मानं बहुमन्यन्ते। शिखरिणी वृत्तम् ॥११३॥

**प्रतिपदे**ति। प्रतिपदं वितीर्णानि शतपर्णानां पल्लवानां च जातानि समूहा याभ्यां तयोः पादयोः कमलकिसलयद्वन्द्वेनोपमानदानमयुक्तम्, पादयोस्तदुत्पादकत्वात्। राजकन्याया नखराणां नखानां मयूखा दीप्तयः सरसा या लतिकास्तासामञ्चलानामग्राण्येव सूचिका वेधन्यस्तासां शिखासु समासादितं तपो यैस्तेषां किसलयानामुपरि विरचिता परिहासभङ्गिरुपहासप्रकारो याभिस्तासामङ्गुलीनां सविलासहासरेखा एव। स्पष्टमन्यत्।

शम्बराराातिशाम्बर्याः सम्प्रदायैर्व्यधायि सा ।
अदृश्यता कथं नो चेदाविर्भवति गुल्फयोः ॥११४॥

शृङ्गारराजजयकाहललालनीय-
जङ्घोपमानकुतुकी नवशालिगुल्मः ।
आसीत्तुषावृतफलः परिपाककाले
व्रीडामधोमुखतया विवृणोति चायम् ॥११५॥

सम्भावयन्ती सततं तदूरुस्तम्भादपायं किल राजरम्भा ।
पुटच्छलानेककवाटमध्यलीनापि नो जातु जहाति कम्पम् ११६

परचक्रमखिलमाक्रम्य नियतमन्योन्याभिलषितान्यूना-
भोगसमुन्नत्योरारोहवक्षोरुहयोरन्तरा किमिति न शून्यता-

---

**शम्बरे**ति । शम्बराराातेः कामस्य शाम्बर्याः मायायाः संप्रदायैः सा व्यधायि समुदपाद्यत, नो चेदन्यथा गुल्फयोरदृश्यता कथमाविर्भवति । अनुष्टुब् वृत्तम् ॥११४॥

**शृङ्गारे**ति । शृङ्गार एव राजा तस्य यो जयकाहलस्तेन लालनीयोपमेया (काहलश्चरणायुधे शब्दमात्रेऽपि पुंल्लिङ्गस्त्रिषु शुष्के भृशे खले) (काहलो वाद्यभेदो वंशादिसदृशो मुखाध्मानीयः) या जङ्घा तस्या उपमाने कुतुकी, नवशालिगुल्मः ('गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः स्तम्बे चे'ति मेदिनी)नूतनः शालिस्तम्बः परिपाककाले फलप्राप्तिकाले तुषावृतफल आसीत् । अधोमुखतया चायं व्रीडां विवृणोति प्रकटीकरोतीति । वसन्ततिलकं वृत्तम् ॥ ११५ ॥

**सम्भावयन्ती**ति । सततं तदूरुस्तम्भादपायं संभावयन्ती किल राजरम्भा राजकदली पुटच्छलेन निःसारदलोत्करव्याजेन यान्यनेकानि कपाटानि तेषां मध्ये लीनापि जातु कम्पं न जहाति न परित्यजतीति । उपजातिवृत्तम् ।

**परचक्रे**ति । परचक्रमखिलमाक्रम्य नियतं नियमेनान्योन्यमभिलषिताऽन्यूना आभोगस्य परिपूर्णतायाः समुन्नतिर्याभ्यां तयोरारोहवक्षोरुहयो-

मध्यभुवि विद्योतताम्, मन्दाक्षकन्दर्पयोर्माभूदिह समानाधिकरण्यजन्यं जन्यमिति तारुण्यारम्भेन तदुभयावलम्बतया निपातिता सीमाविभागसूत्ररेखेव रोममालिका, अत एव तयोरन्योन्यं सामान्यं प्राधान्यम्।

निराकृतं नीररुहं मुखाब्जादम्बु प्रविश्यानियतप्रसन्नम्।
वरं नवाधोवसतिर्ममेति रेखाच्छलात्तत्पद एव लीनम्॥११७॥

आश्रित्य शश्वदभिवृद्धिकृते मुखत्वं
पूर्णामृतांशुमभिवीक्ष्य भुवं स्पृशन्तम्।
अर्धेन्दुरप्यलिकतामभजत् किमस्या
मार्गो महत्प्रहत एव ततोखिलानाम्॥ ११८॥

---

जघनस्तनद्वन्द्वयोरन्तरा किमिति शून्यता न विद्योतताम्। हस्तिनोर्युद्धयमानयोर्मध्ये लघुवृक्षाणामिव दशां को वहेत्। मन्दाक्षं लज्जा ('मन्दाक्षं ह्रीस्त्रपा लज्जे'त्यमरः)। कन्दर्पश्च तदेतयोर्मध्ये समानाधिकरणजन्यमेकस्थाननिवासजन्यं जन्यं युद्धं माभूदितिहेतोस्तारुण्यारम्भसम्राजा तदुभयालम्बिनी सीमाविभागसूत्ररेखेव रोममालिका निपातिता। लज्जायाः हृद्यवस्थानात्, कन्दर्पस्य च जघनस्थितिकत्वात्। स्पष्टमवशिष्टम्।

**निराकृतमि**ति। मुखाब्जान्नीररुहं निराकृतमिति लज्जाधिक्येन तदम्बुनि प्रविष्टम्। तत्र प्रविश्यापि नियमेन प्रसन्नं नाभूत्। तामप्रसन्नतामपनिनीषुः शत्रुमेव शरण्यं शरणमाललम्बे, तदाह—मम तवाधोवसतिरेव वरमिति रेखाच्छलात्तत्पद एव लीनमिति। उपजातिवृत्तम्॥११७॥

**आश्रित्ये**ति। शश्वदभिवृद्धिकृतेऽस्या राजकन्यायाः मुखत्वमाश्रित्यैतन्मुखस्य सर्वदैव वर्धमानत्वात् क्षयविरहितत्वाच्च भुवं स्पृशन्तं पूर्णममृतांशुं सुधांशुमभिवीक्ष्य, गड्डलिकाप्रवाहन्यायेनार्धेन्दुरपि किमस्या अलिकतां ललाटरूपतामभजत्। पूर्णेन कृते कर्मणि न्यूनस्य निष्प्रतिघं प्रवृत्तेस्त-

वलक्षतर-कटाक्ष-कान्ति-सन्दर्शित-मन्दाकिनी-लहरि-सन्दोहस्य, विभ्रम-स्पन्दन-मात्र-निर्वर्तितानल्प-कन्दर्पस्य नयनद्वन्द्वस्य पुरस्तादम्बु-प्रहित-सम्भृत-जीवनानां शम्बरारि-ध्वजाम्बरैकदेशावलम्बिनां शफराणां स्मरणमपि न साम्प्रतम् ।

निज-गर्भ-देश-प्रवेशिनां कुशेशयानामुपरि कोपाभिनिवेश-मपनिनीषुश्चरणयोः सदेश-देशमुपगन्तुमिव प्रकाशितायति-श्चाजनि केशपाशः ।

किं बहुना—

आरभ्य जन्मदिनमम्बुजसम्भवो यद्
अभ्यस्तवानखिलयौवतसर्गशिल्पम् ।
प्रादर्शयन्मृगदृशीह समस्तलोक-
प्रख्यापनाय तदिदं फलितं चिराय ॥ ११९ ॥

---

दर्थान्तरन्यासेनाह—अखिलानां कृते महद्भिः प्रहतोऽभ्यस्त एव मार्गः साधीयानिति ॥११८॥

**वलक्षतरे**ति । उपरितनसंदर्भस्यायमाशयः । अस्या नयनयुग्मस्य पुरः शफरीमकरीणामुपमानार्थं फर्फरायितानि तेषां मन्मथध्वजैकदेशस्थत्वादस्या-श्चक्षुषोश्च कन्दर्पसहस्रस्य क्षणेन जनकत्वात् । एवं शफराणां जलायत्तजीवन-त्वात् अस्याश्चक्षुषोश्च मन्दाकिनीलहरिसन्दोहसम्पादकत्वान्नितरां साम्यं न संजाघटीतीति ।

**निजे**ति । निजस्य केशपाशस्य गर्भे प्रवेशिनां कृतानधिकारचेष्टानां कुशेशयानामुपरि कोपाभिनिवेशमपनिनीषुश्चरणयोः सदेशं देशमावसथमुप-गन्तुमिव प्रकाशितायतिः केशपाशोऽजनिष्टेत्यर्थः ।

**आरभ्ये**ति । स्वजन्मदिनादारभ्य चतुराननोऽखिलस्य यौवतस्य युवतीसमूहस्य सर्गे निर्माणे शिल्पं चातुर्यमभ्यस्तवान्, समस्तलोकेषु प्रख्या-

पुनःपुनरिन्दुवदनायाः सौन्दर्यलहरीमवगाहमानोऽपि अविरहितविरहमहोष्मा महीपतिर्विदूषकागमनम् अनन्यकार्यः प्रत्यपालयत् । तदनु विदूषकः समागत्य शयन-गृह-बहिर्द्वार-वर्ती पार्थिव-नयन-स्पन्दन-संज्ञा-विज्ञात-निजागमनतया सरभसोपाश्रित तदीयपार्श्वो 'विचारितं वा तदि'ति विरचितानुयोगः शनैरगादीत् देव ! चन्द्रिकायामेव चकोरस्याभियोगः, यदेषा समस्त-सामन्त-वसुन्धरा-रमण-शेखरान्तराल-विशुद्ध-चरणारविन्दस्य, दिवस-बान्धव-कुल-धुरन्धरस्य, सकलमहीपुरन्दरस्य देवचान्दिरस्य सुशीलान्ववाय-सुभग-शुभ-गुणावलम्बिकायां त्रपाम्बिकायां नीहारमहीधरस्य मेनायां हैमवतीव समुदितवती सततविरचितानेकदानयोः,असाधारण-भुजापदानयोः, अखिल लोक-कृत-बहुमानयोः, तिरुमल-राजाभिधानयोः, उभयोः प्रधानयोरवरजा वरदाम्बिकाभिधाना वरवर्णिनी ।

वर्णनीय-विचित्रतर-पवित्र-चारित्रा वर-प्रसाधनाभिधान-

---

पनाय च तदिह मृगदृशि प्रादर्शयदिदं च शिल्पमिह कन्यायां चिराय चिरात्फलितं सफलमजनिष्टेति । वसन्ततिलकं वृत्तम् ।

**पुनरि**ति । 'कच्चिद्विचारितन्तदि'तिराज्ञा कल्पितप्रश्नव्याजेन विदूषकः पृष्टः सँस्तदभ्यर्णं स तूर्णमुपेत्याचचक्षे—एतेन पुनरित्यारभ्यागादीदित्यन्तं व्याख्यातम् । सामन्ताश्च ते वसुन्धरारमणा राजान इति ते तेषु पूजितचरणस्य सकलमहीपुरन्दरस्य भार्यायां त्रपाम्बिकायां नीहारमहीधरो हिमालयस्तस्य मेनायां हैमवतीव पार्वतीव समुत्पन्ना वरदाम्बिका नामिका बालिका स्पष्टमन्यत् । सततं विरचितान्यनेकान्यपदानानि वृत्तकर्माणि याभ्यां तयोः,

व्रत-साधनाय गौरीवनं नाम तपोवनमुपगतवती । तदन्तरा मूर्तिमन्तं कन्दर्पमिव भवन्तमभिवीक्ष्य तत्क्षण-विसृत्वर-सात्त्विका पर-तन्त्र-निखिलेन्द्रिया व्यस्मरदात्मानम्। अन-न्तरम् अभ्यन्तरात् बहिर्निर्गतवति भवति निसर्गधीरापि निर-र्गलहृदयोत्कलिकानिरुद्धचित्तवृत्तिर्निवृत्तकल्पां समाप्य गौर्याः सपर्याम्, एत्य च क्व गन्तव्यम् कुत्र तिष्ठामि किं करोमि किमिव साम्प्रतमिति किमपि न जानाना वासनयेव केवलं परिसरवर्तिनीभिः सखीभिः सममाभाषमाणा शनैर्निजागार-मगात्। अहं तु तदनु तदन्तिकचरीणां परिचारिकाणाम् अन्योन्य-वचनभङ्गिभिरभिलाषानुषङ्गमस्या विश्वस्य भवते निवेद-यितुमागमम् ।

तवैव योग्या धरणीन्द्रचन्द्र ! गुणान्ववायाऽनुगुणा पुरन्ध्री ।
अनुग्रहेण प्रणयेन वास्या गृहाण पाणिं किमहो विलम्बः १२०

शंखोदारगला निशावरमुखी नीलालका कच्छपा-
काराङ्घ्रिर्मकराङ्कजीवनकलाकुन्दाच्छदन्तावली ।

---

तिरुमलेतिराजेति च नामद्वयम् । अवरजाऽनुजा । वर्णनीयं विचित्रतरं पवित्रं च चरित्रं यस्याः सा, विसृत्वरं विसृमरं सात्त्विकं सात्विकभावो रोमाञ्चकम्पा-दिर्यस्याः सा, परतन्त्राणि निखिलानीन्द्रियाणि यस्याः सा । उत्कलिका उत्कण्ठा, विश्वस्य विश्वासं कृत्वेत्यर्थः । स्पष्टमन्यत् ।

तवेति। हे धरणीन्द्राणां मध्ये चन्द्र ! तव गुणैरन्ववायेन चानुगुणानु-कूला पुरन्ध्री कुटुम्बिनी । स्पष्टमन्यत् ॥१२०॥

शंखेति। सा दीर्घाक्षीललना, शंख एव उदारो गलो यस्याः सा, निशाया वरो धवश्चन्द्रस्तद्वन्मुखं यस्याः सा, नीला अलका यस्याः सा, कच्छ-

दीर्घाक्षी गणनीयसद्गुणमहापद्मा मुकुन्दादरा

यत्रास्ते वरदाम्बिका नव निधींस्तत्र स्थितान्मन्महे ॥१२१

इति तदीय-वचन-श्रवण-द्विगुणोपचीयमान-मानस-लालसः, केन सह विचारयामि, के पुनरुपायाः, कस्य मुखादिदं साधनीयमिति चिन्तापरतन्त्रो बहिः कदाचित् औडव-षाडवादिभेदातुरस्वर-ग्राम-विशेष-मूर्च्छना-प्रपञ्चक-विपञ्ची-समन्वित-गानाकर्णनया, कदाचन नवनवरसौत्सुक्येन नाटक-नव्य-काव्य-निरवद्य-गद्य-गद्य-पद्यापथिक-विद्वत्कवि-जन-सरस-कविता-प्रसङ्गेन, कदाचन मनु-मुख-प्रणीत-नीति-सरणि-निर्णीति-परतन्त्र-मन्त्रिवर-तन्तन्यमान-मन्त्रविचारेण, कथञ्चन दिवसानतिवाहितवान् ।

अथ सा पुनरागत्य भवनम्, अनाभाषमाणा सखीजनम्, अनवेक्षमाणा परिचारिकावर्गम्, अशुश्रूषमाणा गुरून्, अव-

---

पाकाराङ्घ्रिः, मकराङ्कस्य कामस्य जीवनकला, कुन्दाच्छदन्तावली, गणनीयः सद्गुणानां महापद्मः संख्याविशेषो यस्याः सा, मुकुन्दे आदरो यस्यास्तादृशी च यत्राऽस्ते तत्र नव निधीन् स्थितान् मन्महे । अत्र श्लेषेण नवापि निधयोऽस्यामारोपिता कन्यायाम् । "महापद्मश्च पद्मश्च शङ्खो मकर-कच्छपौ, मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवे"ति । मुद्रालङ्कारोऽयमित्यत्र 'महापद्म'शब्देन 'पद्म'नामा निधिरपि ग्राह्यः । 'निशावर' पदे 'अवर' शब्दस्य 'खर्व'पर्यायत्वाच्च निधीनां नवत्वं संगमनीयम् । स्वतन्त्र-पाठान्तरकल्पनं तु न न्याय्यम् । शार्दूलविक्रीडितं छन्दः ॥१२१॥

इतीति । सर्वं विशदम् । औडव-षाडवाख्यौ स्वरभेदाविति च ।

अथेति । सन्दर्भोऽयं निगदनीतार्थः, विशेषस्तु अप्रणयन्ती अवादयन्ती ।

न्दमाना कलशोदयकुलदैवतम्, अप्रणयन्ती वीणाम्, अना-
लापयन्ती सारङ्गान्, अनुलापयन्ती हरिणीम्, अनर्त्तयन्ती
बर्हिणम्, अनुद्वाहयन्ती कृत्रिमपुत्रिकाम्, असंयोजयन्ती
हंसमिथुनम्, अनध्यापयन्ती राजकीरम्, विसर्जितमज्जना,
सैरन्ध्रिकानुरोधादविरत-विश्लथ-कैश्य-समीकरण-विचारा,
विकल-सकल-परिचारिका, विमुखीकृताखिलसखीजना,
विस्मृतानुरूपव्यापारा, दिक्षु निक्षिप्तनिजेक्षणमवनीक्षिदागमन-
मेव समुत्क्षिप्तमुखमुत्प्रेक्षमाणा, तदीयनामश्रवणकामनया
दामोदरसामानि सामोदमसकृद् वादयन्ती, स एव मम प्राणसम
इति तमेव गायन्ती, तेन सह रहसि रिरंसमाना, तस्मै विश्रा-
णितहृदया, तस्मादेव जीवितुमिच्छन्ती, तस्य दास्यमेव अजस्र-
माकाङ्क्षन्ती, तस्मिन्नेव प्रतिष्ठितप्रणया सहजावयवसौकु-
मार्यनिर्जितनिजायुधतया कोरकिताधिकतरकोपेनेव कुसुम-
चापेन साटोपमावेदितहृदयतापातिशया भूपालकुमारिका चेत-
सीतिचिन्तां चिरन्तनीमतानीत्।

---

दामोदरस्य विष्णोरच्युतस्य सामानि "अच्युतमस्याक्षितमसी"त्यादिसाम्ना गेयान् तन्त्रान् सामोदं सहर्षं मुहुर्वादयन्ती। 'स एवे'त्यारभ्य 'तस्मिन्नि'त्यन्तं तच्छब्दस्य सप्तसु विभक्तिषु रूपाणि निर्दिश्य तस्याः सर्वात्मना राजनि विनियोगः कवयित्र्या प्रदर्शितः। सैरन्ध्रिका सैरन्ध्री। सा च "चतुःषष्टि-कलाभिज्ञा शीलरूपादिसेविनी। प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिते"त्युक्त-लक्षणवती। कैश्यं केशसमूहः "केशाश्वाभ्यां यञ्छावन्यतरस्यामि"ति यञि रूपम्। कोरकितः प्रवृद्धः।

किमित्युपागां गृहमम्बिकायाः किमर्थमारब्धमिदं व्रतं वा ।
केनाद्विलक्षीकृत एष भूपः किमर्थमासक्तमिदं मनो वा ॥१२२॥

क्व वा स महानुभावः कूलङ्कष-गुण-गणानुरूप-रूप-लीलः क्षोणीपालः, कुत्राहम् अप्रवर्तित-निरत्यय-सुकृत-पालिका, बालिका, क्व वा मम तदौपयिकं रामणीयकम्, क्व वा तादृशस्य तस्य समागमाभ्युपायः सर्वथा सम्प्रति परित्राणाय शरणमन्यं न जानामि ।

एषु स्थास्नुषु धैर्यपादपमहो मूलात्समुन्मूलय-
त्युत्कण्ठा, हृदयं वियोगदहनज्वालैः परं तप्यते ।
तस्येमे विदितास्तथापि न गतास्तस्यान्तिकं द्रोहिणः
प्राणा एव तथाविधाः प्रतिभटा बाणा न मे मान्मथाः१२३

त्यक्तं शीलमुपेक्षितं गुरुकुलं लज्जा समुद्रासिता
निन्द्यं मत्सदृशां पुरः श्रुतिकटु श्रोतव्यमासीद्वचः ।

---

**किमिति** । स्पष्टम् । उपेन्द्रवज्रा वृत्तम् ॥१२२॥

**क्व वेति** । कूलङ्कषगुणगणस्य जनस्यानुरूपे रूपलीले यस्य सः । अप्रवर्तितमनारब्धं यन्निरत्ययं निर्बाधं सुकृतं तस्य पालिका बालिका । स्पष्टमन्यत् ।

**एष्विति** । अहो एषु प्राणेषु स्थास्नुषु स्थितिशीलेषु सत्सु उत्कण्ठा कर्त्री धैर्यपादपं मूलात्समुन्मूलयति, हृदयं च वियोगदहनज्वालैः परमत्यन्तं यथा स्यात्तथा तप्यते दन्दह्यते, इमे ये प्राणास्तस्य विदितास्तं जानन्ति तथापि तस्यान्तिकं गताः, तस्मादिमे प्राणा एव द्रोहिणः शत्रवः सन्ति, मान्मथा बाणास्तु तथाविधा द्रोहिणो द्रोहकारिणः प्रतिभटा विरोधिनो न सन्ति । शार्दूलविक्रीडितम् ॥१२३॥

**त्यक्तमिति** । स्पष्टम्, विशेषस्तु—समुद्रासिता दूरीकृता । मत्सदृशाम् आत्मसमानां सखीनां पुरो निन्द्यं श्रुतिकटुवचः श्रोतव्यमासीज्जातम् ।

दोषश्च प्रकटीकृतः प्रियतमेऽप्येतत्कृते शात्रवाः
प्राणा एव तथाविधाः प्रतिभटा बाणा न मे मान्मथाः १२४

इन्दीवराक्षीमिति चिन्तयन्तीं
सन्दीपिताङ्गं शयने लुठन्तीम् ।
सखीसमाजस्सहदुःखसौख्यः
सन्तापहेतुं शनकैरपृच्छत् ॥ १२५ ॥

ताभिः सानुरोधमनुबध्यमाना शालीनतया कथं कथं चञ्चलनयना 'गौरीवने तस्य विश्वम्भरापतेर्दर्शनात्प्रभृति कर्म किमपि किञ्चिदुदञ्चति स्म, चाञ्चल्यमिदं वारयितुमहं न पारयामि, समुचितमितः परं भवतीभिरेव निवारणीय'मिति निश्चयमेव समुच्चरन्ती सैरन्ध्रीभिः समं सत्वरमभिवर्त्तमानं सौविदल्लं समक्षं कमप्यद्राक्षीत् । आपृष्टः स च प्रहृष्टमनाः विस्पष्टमाचष्ट समस्तभुवनसाम्राज्यलक्ष्मीस्वयंवरपतिनरसिंह-नृपालकुमारेण अच्युतमहारायेण अत्रभवतीं प्रार्थयमानेन सामात्यपुरोहितमुखानुयुक्तौ तव भ्रातरौ सादरान्तरङ्गव्यञ्जक-मुखप्रसादभङ्गिकं तथेत्यङ्गीकृत्य तदात्व एव प्रशस्तमुहूर्ततया प्राहिणुतां भवतीं प्रसाधयितुमेताः सपुरन्ध्रीः सैरन्ध्रीस्तदत्र-भवती सत्वरमुद्युङ्क्तां प्रसाधनाय ।

प्रियतमेऽपि कठोरहृदयत्वादिरूपो दोषः प्रकटीकृतस्तत्कृते मम प्राणाः शत्रवः, मान्मथा बाणास्तु प्रतिभटा विरोधिनो न सन्तीति । शार्दूलविक्रीडितम् ॥ १२४ ॥

**इन्दीवरेति** । पद्यमिदं विगतकाठिन्यावद्यं हृद्यमिति । उपजातिर्वृत्तम् १२५

**ताभिरिति** । कथं कथं कथञ्चिदित्यर्थः, अस्य चञ्चलनयनेत्यनेना-

इत्येतदीयैरनघैर्वचोभिरनम्बुवाहामृतवर्षतुल्यैः ।
सख्यस्सहर्षं सहसा मृगाक्षीं विभूष्य शश्वत् कुतुकादपश्यन् १२६

तदनु मेदिनीपतिः प्रमोदभर-सान्द्र-मन्त्रि-पुरोहित-सादर-वचन-विहित-बहुतरोत्साहः, सहज-सौन्दर्य-गुणालङ्करणेऽपि मङ्गलाचरण-समुचितविविधालङ्कारित-शृङ्गारितः,

विस्तृत-विचित्र-परिस्तोम-प्रशस्त-जय-हस्ति-स्कन्धभाग-सुस्थित-मणिमय-भद्रासन-मध्यमध्यासीनः प्रथम-महीधर-विशङ्कट-शृङ्ग-पर्यङ्क-सङ्गतम्, पर्व-शर्वरी-सार्वभौममनुकुर्वन्, क्रमेण विमानचर-खेचरी-निकर-निराकरण-निपुण-बहुप्रकार-

---

न्वयः । किमप्यनिर्वचनीयं कर्म क्रिया किञ्चिदनिर्वचनीयप्रकारेणोदञ्चति स्मेत्यर्थः । अभिवर्त्तमानमागच्छन्तम्, सौविदल्लः कञ्चुकी अन्तःपुरचरो वृद्धः । भङ्गिः रचना । प्रसाधनम् अलङ्कारयोजनम् । स्पष्टमन्यत् ।

**इतीति** । एतदीयैरनघैरनम्बुवाहामृततुल्यवर्षैः अनम्बुवाहं मेघैर्विनाभूतं यदमृतवर्षं सुधाधारासंपातस्तत्तुल्यैर्वचोभिः सौविदल्लोदीरितैः सहर्षं हर्षनिर्भराः सख्यः सहसा युगपदेव मृगाक्षीं विभूष्य कुतुकात्तदनुपमसौन्दर्यवीक्षणपारवश्यात्तामपश्यन्निति । उपजातिवृत्तम् ॥१२६॥

**तदन्विति** । तदनु महीपतिः प्रमोदभरेण सान्द्रैर्मन्त्रिभिः पुरोहितैश्च सादरवचनैर्विहितः सम्पादितो बहुतरो महानुत्साहो यस्य स तादृशः सन् स्वाभाविके सुन्दरतागुणेनालङ्करणे सत्यपि मङ्गलाचरणस्य मङ्गलविधेः समुचितैर्विविधैरलङ्कारितैरलङ्कारैः शृङ्गारितः सन् ।

**विस्तृतेति** । विस्तृतो विचित्रः परिस्तोमः कुथो यस्मिन् तादृशः प्रशस्तश्च यो जयहस्ती जयकुञ्जरस्तस्य स्कन्धभागे सुस्थितस्यारोपितस्य मणिमयस्य भद्रासनस्य मध्यमध्यासीनः सन्, प्रथममहीधरस्योदयाचलस्य विशङ्कटं विशालं शृङ्गं शिखरमेव पर्यङ्कस्तत्र सङ्गतं स्थितं पर्वशर्वरीसार्वभौमं पार्वणनिशाकरमनुकुर्वन्, क्रमेण विमानचर्यो याः खेचर्यो देवाङ्गनास्तासां

शृङ्गारित-स्थल-स्यन्दनोपरि-मञ्चकान्तर-प्रवृत्त-नृत्त-मत्त-काशिनीजन-समुत्तेजिताम्, अम्भोजलोचना-चरण-मयूख-रेखा-तरङ्ग्यमाण-मौक्तिक-रङ्गवल्लीकाम्, वलभि-खचित-मणि-गण-प्रभा-पुनरुक्त-चन्दन-दामाभिरामाम्, गवाक्षान्तर्गत-कामिनी-कटाक्ष-वीक्षा-मध्यतया निर्धारणीय-कुवलय-दाम-समाज-पद्म-राग-मणि-सद्म-प्रभावितायमान-वितानाम्, अनतिरमणीयाम्, राजवीथिमवगाहमानः, व्यत्यस्ताभरण-विन्यसनम्, विग-लित-नीवि-विनिवेश-कौशेयम्, विस्रस्त-केशहस्तम्, विवर्जि-तान्य-करणीयम्, विजृम्भमाणोत्कलिकम्, विवलमान-विलो-चन-कंपितकं, वलमानाभिः पौरविलासिनीभिरभितोभिलोक्य-मानो विस्तारित-विविध-वस्तु-जातम्, विरचित-कुसुमोपहारम्, विलसमान-वासना-धूपम्, विविधालङ्कार-विचित्रितम्, अति-मात्र-रमणीयम्, समासदत्सम्बन्धिगृहम् ।

---

निकरस्य निराकरणे निपुणो यो बहुप्रकारेण शृङ्गारिते स्थले स्यन्दनस्योपरि समारोपितस्य मञ्चकस्यान्तरे प्रवृत्तं प्रारब्धं नृत्तं येन स मत्तकाशिनीजनो विलासिनीगणस्तेन समुत्तेजिताम् ( वीथिविशेषणमिदम् ), अम्भोजलोचनाः दीर्घाक्ष्यस्तासां चरणानां मयूखरेखास्ताभिस्तरङ्ग्यमाणा विस्फुरन्त्यो मौक्तिकरङ्ग-वल्ल्यो यत्र वीथौ ताम्, वलभिखचिताः जटिता निचिता ये मणिगणास्तेषां प्रभाभिः पुनरुक्तं यच्चन्दनदाम मलयजमाला तेनाभिरामाम्, गवाक्षान्तर्गतानां कामिनीनां कटाक्षैर्या वीक्षा तासां मध्यं तस्य भावस्तत्ता तया, निर्धारणीयो मध्ये स्वीकरणीयो कुवलयदाम्नां समाजो येषां तादृशा ये पद्मरागमणयस्तै-र्विरचितं यत्सद्म तस्य या प्रभा तया वितायमानो वितानो यत्र ताम्, पद्मरागमणिसद्मप्रभावितानेषु कामिनीनीलकटाक्षच्छटा वर्तुलनलिदामपुष्पाकारतां प्राचीकटन्निति भावः। नास्ति अतिरमणीयो यस्यास्ताम्, कौशेयं कौशेयाधो-

प्रविश्य तस्मिन्प्रमना नृपाल-
स्तां राजकन्यां विधिनोपयम्य ।
श्रियं पयोधेरिव शेषशायी
समानयत्तां सदनं स्वकीयम् ॥ १२७ ॥

पट्टाभिषेकमहिषीपदमप्यमुष्यै
दत्त्वाधिकप्रणयदर्शितकौतुकश्रीः ।
क्षोणीपतिस्सह तयान्वभवत्समस्तान्
विख्यातरागसुभगान् विषयोपभोगान् ॥१२८॥

अम्भोजभाजनभृतान्यलिनीलरत्ना-
न्यादाय साञ्जलिरनोकहमञ्जरीभिः ।
निस्सीमविभ्रमरसं नृपसार्वभौम-
मासेवितुं समुदभूदधिभूर्ऋतूनाम् ॥ १२९ ॥

---

वस्त्रम् । केशहस्तः केशकलापः । विवलमानं स्फुरतां विलोचनानां कम्पितं यत्र तद्यथा । स्यात्तथा, विजृम्भिता उत्कलिका उत्कण्ठा यत्र तत् (संबन्धिगृहम् ) वलमानाभिः क्षिप्तपदाभिः । सुगमवशिष्टम् ।

**प्रविश्ये**ति । सुगमम् । उपमानविषये इदं बोध्यं यथा पयोधेः सकाशात् शेषशाय्यनन्तपर्यङ्कशायी विष्णुः स्वं सदनं श्रियं समानयत्तथैव सोऽपि तां स्वसदनं समानयदिति । उपजातिच्छन्दः ॥१२७॥

**पट्टे**ति । पट्टाभिषेकमहिषीपदं प्रधानमहिषीपदमप्यमुष्यै दत्वा तदनन्तरमधिकप्रणयेन दर्शिता कौतुकश्रीः येन तादृशः क्षोणीपतिः तया सह समस्तान् रागबहुलान् भोगानभुङ्क्तेति स्पष्टम् । वसन्ततिलकम् ॥१२८॥

**अम्भोजे**ति । अम्भोजान्येव भाजनानि पात्राणि तत्र भृतानि स्थापितान्यलिरूपनीलरत्नानि समादायानोकहमञ्जरीभिः कृत्वा साञ्जलिः कृताञ्जलिपुटः, निस्सीमो विभ्रमे विलासे रसोऽनुरागो यस्य तं नृपसार्वभौमं चक्र-

अथ कदाचिदालवालवलयमादिमरसाङ्कुराणाम्, अभिनवविलासोपदेशदेशिको हरिणलोचनानाम्, अभिरूप्यकरणकमलभूरनोकहानाम्, अक्षराभ्यासवासरमलिकुमारकाणाम्, उत्सवदिवसः पुष्पितलतिकानाम्, अलीकनिदाघः प्रचुरपरागपाटलानाम्, प्रसूतिमासः पवनपृथुकानाम्, कुहनाघनागमो मकरन्दवाहिनीनाम्, आहोपुरुषिकारम्भः शम्बरशासनस्य प्रपञ्चितसकलजगदुल्लासो मधुमासः प्रादुरासीत्।

चिरकालविरहमसहमानेनेव स्वयमपि तनिमानमवलम्बमानेन मलयपवमानेन समालिङ्ग्यमाना लतिकाङ्गना व्याधूतपलाशराशयो व्यजहुरिव विरहपाण्डिमानम्। अभिनवपत्रान्तरेषु चैत्रसमयलेखकेन परिलिखिता इव परिसर-किसलय-

---

वर्तिनं सम्राजमासेवितुमृतूनामधिभूः सम्राड् वसन्तऋतुः ( चैत्रमासः ) समुदभूदाविरभवत्। वसन्ततिलकं वृत्तम् ॥१२६॥

**अथेति**। देशिकः उपदेष्टा, गुरुः। हरिणलोचना वामाः, हरिणानां लोचनानि च। पुष्पिताः पुष्पवत्यो रजस्वलाश्च, अलीकनिदाघः प्रचुरपरागपाटलानाम्, वास्तविकनिदाघे धूलिसंवलितस्योष्मणः संतापस्य च सत्त्वादस्य केवलपरागबहुलस्य चैत्रमासस्यालीकनिदाघत्वम्। पवनपृथुकाः बालवायवः मकरन्दवाहिनीनां कृते कुहनाघनागमः, कुहनया दम्भचर्ययाऽवास्तविकतया घनागमः। चैत्रे मासि मकरन्दबहुलवर्षे सत्यपि वास्तविकवर्षाकालस्याभावात्। आहोपुरुषिका अहोपुरुषोऽहमिति भाव आहोपुरुषिकाऽऽत्मनो धन्यम्मन्यता "आहोपुरुषिका दर्पाद्या स्यात् संभावनाऽऽत्मनि" इत्यमरः। स्पष्टमन्यत्।

**चिरकालेति**। तनिमानम् कार्श्यम्। पाण्डुजीर्णपर्णमोचनव्याजेन विरहपाण्डिमानं चैत्रभर्त्रा मिलित्वा व्यजहुरिव। चैत्रसमय एव लेखकस्तेन

गृहयालु-कोकिल-कालिम-मालिकाञ्जन-शबलिता बकुल-वर्णावलीः अवलोकयन्, निरन्तरं तन्तन्यमान-झंकार-निनद-प्रपञ्चापदेशेनेव चञ्चरीकसञ्चयो व्यञ्जयति स्म पञ्चशर-निगम-पठन-परिपाटीम्, सन्तत-मलय-तटान्तर-चन्दनामोद-मेदस्विनि समीरणतरुणे मन्दमुपवनमन्दिरसीमनि तरलयति मञ्जु-मञ्जरी-कुचासङ्ग-मधुकर-मालिकोत्तरासङ्गम्, अङ्कुरित-मकरन्द-घर्म-बिन्दु-सन्दोहम्, अवलम्बित-कम्प-संबाधं माधवी-लता-बालिकया कुसुमपरागव्याजादराजन्त परिसर-विटप-प्रवाल-दीपिकोपरि-विकीर्ण-परिशीर्ण-चूर्ण-मुष्टयः।

---

लिखिता इव परिसरकिसलयानां पर्यन्तभूवर्त्तिपल्लवानां गृहयालवो ग्रहीतारो ये कोकिलास्तेषां कालिममालिकैवाञ्जनं मषी तेन शबलितानि बकुलस्य मुकुलान्येव वर्णावल्यस्ता अवलोकयन्, निरन्तरं तन्तन्यमानो यो झङ्कारनिनद-प्रपञ्चस्तस्यापदेशेन व्याजेन, चञ्चरीकसञ्चयो भ्रमरसमूहः, पञ्चशरकृतनिगमस्य पठनपरिपाटीं व्यञ्जयति स्म बोधयति स्म। अन्योऽपि श्रोत्रियो वेदमुच्चैरधीते पत्राण्यालम्ब्य हस्ते तथैव किसलयरूपपत्रसंचयमादाय चञ्चरीका अपि वेदपाठमकार्षुरितिभावः। सन्ततमलयपर्वततटस्यान्तरे यश्चन्दनामोदस्तेन मेदस्विनि निबिडे, समीरण एव तरुणो युवा तस्मिन्, मन्दं मन्दमुपवनमेव मन्दिरं गृहं तस्य सीमनि देशे, मञ्जवो मञ्जर्य एव कुचास्तत्रासङ्गो निधानं यस्य तादृशो मधुकरमालिकारूप उत्तरासङ्गः कुचावरणोपवस्त्रं तं तरलयत्यपनयति सति, माधवी वासन्तीलतैव बालिका तया, परिसर उद्यानप्रान्ते ये विटपाः शाखिशाखाविस्तारास्तेषु ये प्रवाला नवपल्लवास्त एव दीपिका लघुदीपाः ('स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षाऽपचये यदि' इत्यमरः) तासामुपरि तन्निर्वापणार्थं विकीर्णाः प्रक्षिप्तास्ततश्च परिशीर्णाः परिपतिताश्चूर्णमुष्टयः कुसुमपरागव्याजादराजन्त। माधवीलताबाला चूर्णमुष्टिप्रक्षेपकाले कीदृश्य-भूदितिक्रियाविशेषणद्वयेनाह—अङ्कुरितो मकरन्द एव घर्मबिन्दुसन्दोहो यत्र

आकुञ्चिताग्रमभिरामदलानुबन्ध-
मारामसीम्नि नवकिंशुकमञ्चति स्म ।
पान्थाघनाघनपयोधरशैलशृङ्ग-
सङ्घट्टनादतनुशस्त्रमिवातिकुण्ठम् ॥ १३० ॥

उच्चैरुन्नमिताग्रमल्पविततं पत्त्रद्वयं बन्धुरं
बिभ्राणो रसिकोऽविशन्मधुकरो यद्गर्भमम्भोरुहः ।
नित्यं पालयता द्विपत्त्रितमहो शृङ्गारबीजं निजं
तत्प्रायः सरसालवालवलये पुष्पेषुणा रोपितम् ॥ १३१ ॥

अभङ्गुर-मधुर-झङ्कार-रव-वाद-जात-पाटवाः, तरुणोपवन-भवनेषु समुल्लसित-पल्लव-पटल-प्रकटित-परस्परानुराग-भरितानां

---

तत्तथा अवलम्बितश्च यः कम्पस्तस्य संबाधो निबिडता यत्र तत्तथा । एतेन सात्विकभावोदयो व्यञ्जितः ।

**आकुञ्चितेति** । आरामसीम्नि उद्यानप्रान्तदेशे आकुञ्चितमग्रमग्रभागो यस्य तत्, अभिरामो दलानुबन्धः पत्त्रसंबन्धो यत्र तत्तादृशं नवोद्गतकिंशुकं पुष्पं पान्थायाः पान्थभार्यायाः पीवरत्वान्मांसलत्वाच्च घनाघनावतिनिबिडौ यौ पयोधरौ तावेव शैलौ तयोः । शृङ्गसंघट्टनादतिकुण्ठमतनोः कन्दर्पस्य शस्त्र-मिवाञ्चति स्म शोभते स्मेति । वसन्ततिलकम् ॥१३०॥

**उच्चैरिति** । उच्चैरुन्नमितमग्रं यस्य तत्तादृक्, अल्पविततं बन्धुरं च च पत्त्रद्वयं बिभ्राणो रसिको रसलोलुपो मधुकरोऽम्भोरुहोऽम्बुजन्मनो गर्भ-मन्तरालमविशदगच्छत्, यत् तन्नित्यं पालयता पुष्पेषुणा द्विपत्त्रितं समुदित-पत्त्रद्वयं निजं शृङ्गारस्य बीजं सरसे पद्मरूपे आलवालवलये प्रायः रोपित-मित्यहो चित्रमित्युत्प्रेक्षा । अन्योऽपि केदाराजीवो मालिको वा प्राक्बीजानि वपति क्वचिदेकत्र क्षेत्रे, ततश्च जाताङ्कुरेषु बीजेषु तानि तत उत्खाय क्वचि-त्सरसे आलवाले नियोजयतीति । शार्दूलविक्रीडितम् ॥१३१॥

**अभङ्गुर** इति । अभङ्गुरो मधुरश्च यो झङ्काररवस्तस्य वादे उच्चारणे

लता-तरु-मिथुनानां परस्पर-प्रेषण-कलित-यातायाता दूता इव समदृश्यन्त मधुव्रतव्राताः ।

> आलम्ब्य कोरकित-कोमल-चूतयष्टि-
> मास्वाद्य केलिसरसां सरसाम्बुपूरम् ।
> सर्वत्र सौरभभरं विधृतं विकीर्य
> श्रान्तिं किलापनयति प्रसृतस्समीरः ॥ १३२ ॥

सतत-परिचित-शातोदरी-चरण-घात-कौतुकान्तराय-चिन्ताकुलतया निरन्तरजागरादिव नितान्तरक्तेषु कुसुम-नयनेषु निभृत-मधुकर-कनीनिका मधुरस-बाष्प-धारा धीरतया

---

जातं पाटवं येषां ते मधुव्रतव्रातास्तरुणान्युपवनान्येव भवनानि तेषु समुल्लसितानि यानि पल्लवपटलानि तैः प्रकटितोऽरुणवर्णत्वेन व्यञ्जितो यः परस्पर-मनुरागस्तेन भरितानां लतातरूपाणां मिथुनानां यत् परस्परं प्रेषणं तत्र कलिते विहिते यातायाते यैस्तादृशा दूता इव मधुव्रतव्राता समदृश्यन्त क्षणं लतासु क्षणं तरुषु च डयमाना मधुकरास्तयोरन्योन्यसंदेशहरा इव बभुरितिभावः ।

**आलम्ब्येति**। विधृतं मलयाचलाच्छिरस्यानीतं सौरभभरं सर्वत्र विकीर्य कोरकितां कोमलां च चूतयष्टिमालम्ब्य, केलिसरसां सरसमम्बुपूरमास्वाद्य प्रसृतः सर्वत्र प्रसारं प्राप्तः, अन्योऽपि हस्तपादं प्रसार्य पर्यङ्के विश्राम्यति तद्वत्, समीरो मातरिश्वा श्रान्तिमपनयति दूरीकरोतीति। वसन्ततिलकम्॥१३२॥

**सततेति**। सततं परिचिता अभ्यस्ता ये शातोदरीणां चरणाघातास्तेषां कौतुकमभिलाषस्तस्मिन्नन्तरायस्य (अन्तरायो मा सम्पादीति) या चिन्ता तयाऽऽकुलतया निरन्तरं जागरादिव, यथा सर्वरात्रिजागरणात्कस्यापि नेत्रे शोणे भवतस्तद्वत्, नितान्तरक्तेषु कुसुमान्येव नयनानि तेषु, निभृता ये मधु-करास्त एव कनीनिका येषां ते तादृशाः, मधुरस एव बाष्पं तस्य धारास्तासां

अन्तःप्रतिनिवारित-शोका इव रक्ताशोकाः पथिकलोकाना-कुलयन्। कन्दलदमन्दसौहृदोत्कण्ठानां कलकण्ठानां चिर-परि-गृहीत-कृत-मौन-व्रतमुद्यापयितुमुद्यते मधु-समय-सार्वभौमे मलय-गिरि-जात-मारुत-पुरोहितेन आमन्त्रित-षट्चरण-द्विज प्रजामुखेषु निक्षिप्ता हरिद्राक्षता इवालक्ष्यन्त लिलक्षयिषिताः (?) केसर-कुसुमकेसराः ।

अथ मलय-गिरि-सञ्चार-संक्रान्त-चन्दन-शैत्यासहन-तयेव प्रज्वालित-मदनानलेषु मन्दानिलेषु कपिश-पराग-काञ्चन-भसित-सेवयेव प्रपञ्चित-कान्ति-सन्तानेषु चम्पक-प्रसूनेषु, रति-कन्दर्प-कौतुकेनेव अवतंसित-किसलयेषु द्राक्षावलयेषु, सरसिज-मकरन्द-जम्बाल-संचरण-खञ्जेषु चटुल-चरण-पुञ्जेषु, किसलय-ग्रसन-तुन्द-परिमृजेषु कोकिलव्रजेषु, सविकार-हृदय-

---

धीरतया निश्चलतयाऽन्तः प्रतिनिवारितः शोको यैस्ते तादृशा इव रक्ताशोकाः पथिकलोकान् आकुलयन् व्याकुलानकुर्वन्। कन्दलदमन्दं यत्सौहृदं तत्रोत्कण्ठा येषां तेषां कलकण्ठानां पिकानां चिरगृहीतं मौनव्रतमुद्यापयितुं सविधि समापयितुमुद्यते मधुसमयरूपे सार्वभौमे मलयगिरिजातो मारुत एव पुरोहितस्तेन आमन्त्रिताः षट्चरणा मधुकरा एव द्विजानां ब्राह्मणानां प्रजाः अपत्यानि द्विजरूपमधुकरबटवस्तेषां मुखेषु निक्षिप्ता विकीर्णा हरिद्राक्षता इव लिलक्षयिषिताः (?) केसरस्य कुसुमेषु स्थिताः केसरा अलक्ष्यन्त प्रत्यैयन्त ।

अथेति। अथ मलयगिरौ यः सञ्चारस्तेन संक्रान्तं यच्चन्दनशैत्यं तस्यासहनतयाऽसहिष्णुतयाऽग्नितपनार्थमिव प्रज्वालितमदनानलेषु मन्दानिलेषु सत्सु, रतिकन्दर्पयोः कल्याणं शिवं तस्य कौतुकेनाभिलाषेण वावतंसिताः शिर-

पुनस्समाधान-सावधानेषु तपोधनेषु, परिचित-तिरस्करिणी-विद्या-विहारेषु नीहारेषु,

कदाचिदुद्यानपालिका समागम-रभस-तरलेन कुन्तलेन मधुकर-कलभावतरणम्, परिमल-लहरी-समुल्लसितेन निःश्वसितेन मन्द-गन्धवहम्, कन्दलद्वदन-कमल-विसृमरेण निदाघ-बिन्दु-निकरेण मकरन्द-स्यन्द-कणिकोद्गमम्, नितान्त-परिश्रान्ति-योगेन मध्यभागेन जाति-कुसुम-शून्यताम्, संव्यान-कर्ष-सङ्घर्ष-शीर्णेन कुचतट-कुङ्कुम-चूर्णेन कुसुम-पराग-परिजृम्भणम, निरुपमारुणिम-शरणेन चरणेन पल्लव-तल्लजोदञ्चितं सूचयन्तीव समर्पित-विविध-कुसुम-परिक्रियोपायना सविनयं निवेदितवती--देव! समाकर्ण्यताम्, वरवर्णिनी-

---

स्यारोपिताः किसलया यैस्तेषु तादृशेषु द्राक्षावलयेषु सत्सु । चटुलचरणाः सितच्छदा हंसाः । अन्यत् सर्वं नीहारेष्वित्यन्तं निगदव्याख्यातम् ।

**कदाचिदि**ति । समागमे समुपागमने यो रभसो वेगस्तेन तरलेन कुन्तलेन (जातावेकवचनम्) मधुकराणां कलभा बालास्तेषामवतरणं सूचयन्तीत्यग्रेणान्वयः। एतेन नीलालकानां मधुकरसादृश्यं प्रस्फोरितम्,एवमन्यत्रापि तस्य तस्य तत्तदवयवरूपत्वं बोध्यम्। परिमलो विमर्दोत्थो गन्धस्तस्य लहर्यस्तासां समुल्लसितेनेव निःश्वसितेन मन्दगन्धवहं (सूचयन्ती), कन्दलद् विकस्वरं यद् वदनरूपं कमलं तत्र विसृमरेण प्रसरणशीलेन निदाघबिन्दुनिकरेण ग्रीष्मोष्मजन्यस्वेदसमुदायेन मकरन्दस्य यः स्यन्दस्तेन याः कणिकास्तासामुद्गमम्,नितान्तं या परिश्रान्तिस्तस्या योगो यत्र तेन तादृशेन मध्यभागेनावलग्नेन जातिकुसुमराहित्यं सूचयन्तीत्यन्वयः । संव्यानमुपवस्त्रमाच्छादनं प्रावारस्तस्य कर्षो आकर्षणं तस्य संघर्षस्तेन शीर्णेन कुचतटकुसुमचूर्णेन पराग-जृम्भणं सूचयन्ती,समर्पितं विविधकुसुमपरिष्क्रियारूपमुपायनं प्राभृतं यया सा

सञ्चय-पर्याय-पक्क-शरः-निखिल-लोचन-भागधेय-भवदीय-रूप-धेय-सामन्तो वसन्तोऽवतीर्य विहारोपवने समुन्नमित-मधुकर-मालिका-भ्रू-वल्लरीकः, तावक-समागमनानुग्रहमिव निर्णिमेष-स्थलनीरजेक्षणः प्रतीक्षते ।

"प्रत्यग्रपूगकुहलीकलिकाक्षतानां
वृन्देन कोकिलशिशुं भृशमर्चयन्ती ।
देव ! त्वदागममहोत्सवलिप्सयासौ
प्रायश्शकुन्तशकुनप्रवणा वनश्रीः" ॥१३३॥

अन्तर्विलासोपवनं चरन्तं वसन्तमालोक्य वनान्तलक्ष्मीः ।
भवन्तमायान्तमवेत्य मौलौ धत्तेऽञ्जलिं कोरककैतवेन ॥ १३४ ॥

---

सविनयं सप्रश्रयं निवेदितवती। स्पष्टमन्यत्। वरवर्णिनी हरिद्रा,(हरिद्रा वरवर्णिनीत्यमरः) तस्याः संचयः स्तोमः पर्यायो येषां तादृशाः पक्काः शरास्तृणविशेषा यस्मिन् सः सर्वलोचनभाग्यभूतभवद्रूपसम्राजः सामन्त इव माण्डलिकराजेव वसन्तः निर्णिमेषानि विकचानि यानि स्थलनीरजानि तान्येवेक्षणे यस्य सः। त्वां प्रतीक्षते। शिष्टं निगदव्याख्यातम्।

**प्रत्यग्रे**ति। हे देव, असौ वनश्रीर्वनलक्ष्मीस्त्वदागममहोत्सवस्य तवागमनमहामहस्य लिप्सया लब्धुमिच्छया प्रत्यगाः नवा ये पूगाः क्रमुकाः, कुहल्यस्ताम्बूलीदलानि कलिकारूपा अक्षताश्च तेषां वृन्देन कोकिलशिशुं भृशमर्चयन्ती तोषयन्ती शुभशकुनोत्पादनाय प्रायः शकुन्तैः कृतं यच्छकुनं तस्मिन् प्रवणा तत्परा वर्तते। वसन्ततिलकम् ॥१३३॥

**अन्तरि**ति। वनान्तलक्ष्मीः काननप्रान्तश्रीर्विलासोपवनस्यान्तर्विलासोपवनं चरन्तं भ्रमन्तं वसन्तमालोक्य भवन्तं चायान्तमवेत्य कोरककैतवेन मौलावञ्जलिं धत्ते,वसन्तमागतं दृष्ट्वा भवदागमनमुत्प्रेक्षमाणा वनान्तलक्ष्मीस्त्वं प्रणमतीतिभावः। उपजातिवृत्तम् ॥१३४॥

मधुव्रतापादितमन्युरेखा-
स्पन्दा मधुश्रीरधुना विभाति ।
त्वदागमानन्दविशेषशंसि-
भुजापरिस्पन्दमिवोद्वहन्ती ॥ १३५ ॥

तदिदमाकर्ण्य कर्णरसायनं वचनम् अवनीपतिः आनन्द-परतन्त्रो यथोचित-पारितोषिक-परितोषित-हृदयाम् अवनतमौलिकाम् आरामपालिकाम् अनुपदमेवागत इत्युक्त्वा, रागतो विसृज्य, मणिभवनाङ्गणात् परिचारिका-समर्पित-करावलम्बनो निरगात् ।

तिलक-तरु-विलोकनायेव वन-विहरण-प्रमोद-विस्तारित-लोचनाभिः, प्रिया-पुत्तलिकानन्द-कन्दल-कारण-गानानुकूल-श्रुति-सहायापेक्षयैव मृगमदालेप-परिमलाकारित-मधुकराभिः, चम्पक-कलिका-कदम्बक-सम्पादनायेव कुङ्कुम-पत्रवल्ली-समुल्लसित-मुखरागाभिः, सहकार-तरु-कुसुम-वितरणायेव पाणि-

---

**मधुव्रते**ति । मधुव्रतैरापादितो मन्युरेखानां वृक्षविशेषश्रेणीनां स्पन्दः संचलनं यस्यां तादृशी चैत्रलक्ष्मीरधुना त्वदागमानन्दविशेषशंसिनं भुजापरिस्पन्दमुद्वहन्तीव विभाति ॥१३५॥

**तदि**ति । रागतः प्रेम्णा । स्पष्टमन्यत् ।

**तिलके**ति। प्रियाया राजमहिष्या याः पुत्तलिकाः शालभञ्जिकास्तासामानन्दकन्दले क्रीडनप्रारम्भरूपाङ्कुरे सति गानानुकूला या श्रुतिः श्रवणं गानाकर्णनमिति यावत्, तस्य सहायापेक्षयेव मृगमदालेपेन (स्वाङ्गेषु) यः परिमलस्तेनाकारिता मधुकरा याभिस्ताभिः । अयमाशयः—राजमहिषी पुत्तलिकानां नर्त्तनं कुर्यात्तत्र तत्सख्यस्तालिकां दद्युस्तच्च विना गानमसंभवीति गायका मधुकरास्ताभिराकार्यन्तेति । चम्पककलिकानां ये कदम्बाः गुच्छास्तेषां सम्पादनायेव कुङ्कुमपत्रादिना समुल्लसितो मुखरागो यासां ताभिः,

कमल-बद्ध-कङ्कणाभिः, नमेरु-कुसुम-विकासायेव विसृमर-नासा-मौक्तिक-विमल-कान्तिमिषेण दर्शित-दर-हसित-पर-स्थान-विधाभिः, वञ्जुल-तरु-मञ्जरी-समर्पणायेव चरणाञ्चल-समन्वित-मञ्जीर-माणिक्य-महः-कलिकाभिः, कुरवकालिङ्गन-तरलतयेव गमनवशेन कम्पित-कुच-कुम्भाभिः, वकुल-मुकुलोद्भेद-निदान-मधु-संग्रह-प्रयत्नेनेव नासा-चम्पक-संत्रासित-केली-कमल-कुहर-वपाभिः, कर्णिकार-कुसुम-सञ्चय-सञ्जीवनायेव व्यञ्जितान्योन्य-वचन-माधुर्य-सुधाभिः, अभिमत-सिन्धुवार-समागम-चापलेनेव त्वरित-गतागत-पयोधर-भार-श्रम-निश्वसिताभिः, शम्बर-शासन-विजय-पताकाभिरिव सञ्चारिणीभिः, मोहनशक्तिभिरिव मूर्त्तिमतीभिः, सङ्केतशालाभिरिव शृङ्गार-देवतानाम्, मञ्जूषिकाभिरिव सौभाग्यमणीनाम्, मधुरालापाय विजितशारिकाभिः परिचारिकाभिः, विहित-सारल्योल्लासि-भवनमिव लतिकानाम्, गीतशालामिव षट्पदानाम्,

---

चम्पकस्तबकरचना तासां मुखपत्रवल्लीभिः सदृशी स्यादितीव ताभिर्मुखानि पत्रवल्लीभिरभूष्यन्तेत्यर्थः । आम्रतरुमञ्जरीदानायेवाबद्धः करे कङ्कणो याभिस्ताभिः, प्रत्यर्पयिता हि दानाय दीक्षां गृह्णन् करे प्रतिसरं बध्नाति । नासामौक्तिकं नासाभूषणमौक्तिकम्। हसितस्य परमुत्कृष्टं स्थानमवस्थानं तस्य विधा प्रकारो याभिस्ताभिः। वञ्जुलो वेतसतरुः। नासैव चम्पकश्चाम्पेयं तरुस्तेन संत्रासितं यत् केलीकमलं तेन हेतुना तत्र कमले जातं यत्कुहरं तदेव वपा विवरं यासु ताभिः । केलीकमलकुहरेषु मन्ये ताभिर्वकुलमुकुलोद्गमो निदानं यस्य तादृशं मधु संगृह्यते, "वपो विवरमेदसो" रिति धरण्यमरौ, सिन्धुवारो ( सिन्दुवारः ) निर्गुण्डी । स एवाभिमतः प्रियः, तेन समागमो मेलनम्। गुणनिकाऽऽवृत्तिरधीतपाठस्मरणं तस्य निकाय उद्देशः । तरुणेषु

सञ्चरणाङ्गणमिव समीरकिशोरकाणाम्, गुणनिकायमिव कोकिलानाम्, तरुण-तरु-लता-प्रतानाभिराममाराममयासीत्।

समेत्य तं सागरमेखलेन्द्रो व्यराजि राजीवविलोचनेन।
सोऽयं वसन्तो वनदेवताभिः स्वयं वपुष्मानिव सञ्चरिष्णुः॥१३६

दीव्यत्पयोधरवरं वलदुत्तरीयं
शिञ्जानकाञ्चीशिथिलालकसन्निवेशम्।
कौतूहलादुपनमत्कुसुमापचाय-
मातन्वते तरलहारमलीकमध्यम्॥१३७॥

अभिनवकुसुमापचायपराणां युवतीजनानामभवन्नुपवनविहारानुरूपाः परस्परमालापाः।

---

तरुषु लता ( वनिता ) भिर्यत् प्रतानं परिवृत्तिस्तेनाभिराममाराममयासीत्। समीरकिशोरकाः बालवाताः। परिचारिकाभिरित्यस्याग्रे सहेति शेषो द्रष्टव्यः, अन्यथा वनदेवताभिरित्याद्युच्यमानाग्रिमश्लोकोपमा न घटेत। सरलमन्यत्।

**समेत्येति**। सोऽयं सागरमेखलाया भुव इन्द्रो भर्त्ता तमारामं समेत्योपेत्य राजीवविलोचनेन कमलसदृशनयनेनोपलक्षितः वनदेवताभिः सहितो वपुष्मान् वसन्त इव व्यराज्यशोभिष्ट 'राजीवविलोचनेन' इत्यत्र 'जटाभिस्तापस' इत्यादिवदुपलक्षणे तृतीया। उपजातिः॥१३६॥

**दीव्यदिति**। (अथ युवतयः) दीव्यन्तौ पयोधरौ यत्र तद्यथा स्यात्तथा, वलन्नमनोन्नमने भजदुत्तरीयं यत्र तत्तथा, शिञ्जाना काञ्ची यत्र तत् तथा शिथिलोऽलकसन्निवेशश्चूडाबन्धो यत्र तत्, अलीको मिथ्याभूतो मध्यो मध्यभागो यत्र तत्, नमनकाले तस्याः प्रत्यक्षायमाणत्वात्। तरलो हारो यत्र तत्, सर्वाणीमानि क्रियाविशेषणानि, कौतूहलादुपनमतां मूर्धन्यालम्बमानानां कुसुमानामप(च)चायं विचायमातन्वते (युवत्य इति कर्तृपदं शेषः)। वसन्ततिलकं वृत्तम्॥१३७॥

पश्यालि ! बालप्रसवं स्वकीयमादातुकामां भवतीमवेत्य ।
इयं लतापल्लवतल्लजान्तानान्दोल्य किं नः प्रतिषेधतीव ॥१३८॥

आरामकामास्त्रनिकेतनेऽस्मिन्
अस्मासु सर्वायुधहारिणीषु ।
चूताङ्कुरं तस्य पिकाः प्रियास्त्रं
चञ्चौ निधायेव समुच्चलन्ति ॥ १३९ ॥

अयि ! निशामय विशालाक्षि ? परिचलदलिपरिषदपाङ्ग-विन्यासैः पश्यति पुन्नागे लज्जयेव कुसुमभरेण नम्रीभवति नवमालिका बालिका" । "सुतनु !-मापचिनु कुसुमानी-मानि, साभिलाषमुपलालिताया यदस्या लतिकायाः पुरत एव पञ्चशरदेवतोपहारतया प्रार्थितानि प्राथमिकानि" "अयि ? तव नितम्ब कुचकुम्भस्याभिवृद्धिसंपदितोऽपि परिजृम्भतां यद्भरातिशयनिर्भराकुञ्चितायां त्वयि चरणाञ्चलाधारतया

---

मिथस्तासामित्थं प्रसङ्गालापाः-**पश्ये**ति । हे आलि ! पश्य भवतीं स्वकीयं बालप्रसवमादातुकामामवेत्येयं लता प्रशस्तकिसलयप्रान्तान् आन्दोल्य किं नः प्रतिषेधतीवेति ? उपजाति वृत्तम् ॥ १३८ ॥

**आरामे**ति । आराम एव कामास्त्रनिकेतनं तस्मिन् अस्मिन् उद्यानेऽस्मासु सर्वायुधहारिणीषु सतीषु तस्य कामस्य प्रियास्त्रं चूताङ्कुरं पिकाश्चञ्चौ 'तन्मा हृते'तिमनीषयेव निधाय समुच्चलन्ति पिकाश्चूतमञ्जरीरास्वादयन्तीति-भावः । इन्द्रवज्रा वृत्तम् ॥ १३९ ॥

**अयी**ति । परिचलन्ती भ्रमरपरिषदेवापाङ्गविन्यासाः कटाक्षाः तैः । पुरत एव प्रथमत एव । प्रार्थितानि संकल्पितानि । तव नितम्बयोः कुचकुम्भयोश्चाभिवृद्धिसंपादितोऽपि वर्तमानापेक्षयाप्यधिकं परिजृम्भतां वर्द्धता-

निश्शेषितानि मया निरुपमानि कुसुमानि । अविरतमकरन्द-स्यन्दजम्बालितेऽवनितले मा कलय पदकमलम् । "अयि ! मदिराक्षि ! किं सहसे कुचाञ्चलोत्क्षेपणम्" । अयि कलकण्ठि ! तिलके किल केन निमित्तेन निपात्यते न त्वया दृष्टिः, किमु तव तरु-विटप-मञ्जरी-मकरन्द-निष्यन्दैरविमृष्टं मृगमद-तिलकमस्तीति' । अयि प्रियतमालि तमालिपल्लवमपि न किमु प्रधार्यते हृद्यायते किमु कुशलं कपोलकुङ्कुमतमालपत्रमिति" ।

एवंविधैर्नर्मवचोविलासैः सखीजनस्य श्रवणातिथेयैः ।
अज्ञातपुष्पापचयप्रयासा देवी तदा कम्रगतैरचारीत् ॥१४०॥

कल-निनद-मणि-वलय-मनोहारिणा पाणिकिसलयेन विसृमर-सौरभ-भराधिवासित-दिशावकाशानि निवासकुसुमानि अपचेतुमभिलषन्त्याः कस्याश्चित् क्षान्ततया क्षणान्तरायकरणाय समुदञ्चयन्निव चञ्चलेन गरुदञ्चलेन किंजल्क-पराग-पुञ्जमदसीय-पतनकातरतया मुकुलिमानमुपजग्मुषी निजपरि-

---

मित्याशीः, यतो येषां भरातिशयेन विनम्रायां त्वयि सत्यां चरणाञ्चलस्य चरणप्रान्तस्याधारतया तव विनताया उपर्यारुह्येत्यर्थः । मया कुसुमानि निःशेषमाहृतानि । कुचाञ्चलयोरुत्क्षेपणमुत्थापनक्लेशम् । तिलके तन्नाम्नि वृक्षके । हृद्यायते आयते हृदि विशाले हृदयभागे इत्यर्थः । स्पष्टमितरदिति ।

**एवंविधैरि**ति । देवी वरदाम्बिका सखीजनस्यैवंविधैः श्रवणयोरातिथेयैरतिथिकर्णातिथ्यनिपुणैर्वचोविलासैरज्ञातपुष्पावचयप्रयासा कम्रैः कमनीयैर्गतैर्गमनैरचारीत्तस्मिन्नुद्याने विहरति स्म । उपजातिः ॥१४०॥

**कले**ति । कलो निनदो यस्य तच्च तन्मणिवलयं तेन मनोहारिणा करपल्लवेन निवासकुसुमानि (भ्रमरस्य) वसतिरूपाणि पुष्पाणि क्षणमन्तरा यस्य विघ्नस्य करणाय विधित्सया गरुदञ्चलेन पक्षपुटप्रान्तेन चक्षुषी ( प्रतीतिशेषः ),

भवपुषी कज्जलमलिनवपुषी चक्षुषी प्रकटित-झंकार-हुंकार-मुच्चलति स्म कश्चन षट्चरण-तरुणः ।

निजबन्धुतया नवं प्रवालं परिरब्धुं किल पाणिरुद्यतोऽस्याः ।
कुसुमस्तबकं कुचस्तथैव स्वयमाप्तुं नमति स्म किं सुदत्याः १४१

कस्याश्चिदासाद्य करान्तरालं
गलत्कलाऽलिस्वनगर्ववादः ।
नवप्रवालो नखकान्तियोगात्
प्रपद्य लज्जामथ पाण्डरोऽभूत् ॥ १४२ ॥

कयाचन कुच-जघन-भर-स्तम्भितारम्भ-संरम्भया निज-मनसा कृतसुमनोरक्षेण पुनरसरन्ती कापि कुसुमचापचरणो-परि दत्तशपथापि प्रसभेन तत्प्रसूनमवचिन्वती व्याधूत-

---

चक्षुर्युगमुद्दिश्येतियावत्, स्वस्य मधुकरस्याभिभवेन प्रकटितझंकारहुंकारं यथा स्यात्तथा चलति स्म कश्चन षट्चरणतरुणः । सर्वमन्यत्स्पष्टम् ।

**निजे**ति । नवं प्रवालं परिरब्धुमस्याः पाणिर्निजबन्धुतयोद्यतोऽभूत् । एवमेव कुसुमस्तबकमालिङ्गितुं किं कुचोऽपि नमति स्मेति सर्वं सुस्थम्। औप-च्छन्दसिकं छन्दः ॥ १४१ ॥

**कस्याश्चिद्**ति । नवप्रवालः कस्याश्चित् करान्तरालमासाद्य, गलन् कलैर्मनोरमैरलिस्वनैर्गर्वस्य वादपूर्वं कृता घोषणा यस्य स तादृशः सन् नख-कान्तीनां करनखरप्रभाणां योगाल्लज्जां प्रपद्याथानन्तरं पाण्डरो निर्वर्णो मलीमसकान्तिरभूत् । पल्लवस्थिता मधुकरा हस्तसंपर्के सत्युड्डिड्यिरे प्रवालश्च भङ्गापरक्षण एव निष्प्रभोऽभूदितीयं हेतूत्प्रेक्षा । उपजातिवृत्तम् ॥ १४२ ॥

**कयाचने**ति । कयाचन कुचजघनभारेण स्तम्भितो रुद्ध आरम्भस्य संरम्भः पुष्पावचयप्रथमावतार एव यस्यास्तया निजमनसा कृता सुमनसां

विलुलितस्य मधुव्रतस्य सन्तत-मधुरसास्वाद-सौहित्य-विरचिताम् अरुचिम् अधरसुधामाधुरीभिरपनोदयन्ती सपदि समासदत् तादृशनिजोद्दण्डताफलम् ।

कयाचिदाकुञ्चितमुक्तशाखस्तरुः प्रसूनान्यवितीर्य पूर्वम् ।
ववर्ष पश्चादिव सानुतापस्तीव्रानुरागं हि तनोत्युपेक्षा ॥१४३

अतनु-निगम-परम-रहस्य-विद् अपरैरपि सुदृशां गणैः आशु-केलिका-निकायः सहकारानोकहः तदीय-कर-तामरस-सङ्गोत्तरङ्गित-कुसुमैश्वर्य-विचित्रतया पात्र-विशेष-स्पर्श-महिमानमिव आवेदितवान् ।

---

पुष्पाणां रक्षा येन तादृशेन मनसा सता पुनरसरन्ती, कापि च पुनः पुष्पधन्वनः पदावालभ्य कृतशपथापि प्रसभेन स्वशपथोपरि बलात्कारेण तदेव प्रसूनमवचिन्वती सती व्याधूतस्यात एव विलुलितस्य पतितस्य मधुव्रतस्य सन्ततं मधुरसास्वादेन यत् सौहित्यं तृप्तिस्तेन विरचितामरुचिमधरसुधामाधुरीभिरपनोदयन्ती, प्रकम्पिततरुशाखानिपातेन क्रुद्धोऽनवहितमनाः पुष्परसेनातृप्तो मधुकरो धरण्यामपतत्। ततश्चोड्डीयासौ तदधरदंशोपदंशेन स्वारुचिमपनीय सपदि तादृश्यास्तस्याः पातनोद्दण्डतायाः फलं प्रतिददे ।

**कयाचिदि**ति। कयाचित्पूर्वमाकुञ्चिता पश्चान्मुक्ता च शाखा यस्य तादृशस्तरुः पूर्वमाकुञ्चनकाले प्रसूनान्यवितीर्य पश्चात्तत्परित्यागरूपोपेक्षाकाले सानुतापः सानुशयः सन् ववर्ष, हि यतः ( 'हि हेताववधारणे' इत्यमरः ) उपेक्षा तीव्रानुरागं तनोति जनयति । उपजातिवृत्तम् ॥१४३॥

**अतन्वि**ति । अपरैः सुदृशां ललनानां गणैः आशुकेलिश्चक्षुर्मुद्रितोन्मुद्रितादिरूपा शीघ्रतावती क्रीडा तस्याः निकायः संकेतस्थानीकृतः । "निकायः समुच्चये संहतानां निलये परमात्मनीति मेदिनी", सहकारानोकहश्चूततरुः, योऽतनोः कन्दर्पस्य निगमस्य परमरहस्यवित्सन् तदीयकरतामरससङ्गेनोत्तरङ्गितं कुसुमैश्वर्यं यस्य तस्य भावस्तत्ता तया पात्रविशेषस्पर्शमहिमानमनक्षरमाचचक्षे ।

संप्रत्यहं पुष्पवतीति वात-
व्याधूतपल्लवकराञ्चितचेष्टितेन ।
मा मां स्पृशेति सहसैव निवारयन्तीं
वासन्तिकामलिभियोपगता न काचित् ॥१४४

मरुत्किशोरेण विकीर्यमाणैर्मरन्दपूरैर्महितैश्च पुष्पैः ।
कृतोपहारेषु लतागृहेषु विशालनेत्रा विहृतिं व्यतानीत् ॥ १४५ ॥

अम्भोरुहाणामपसारयन्ति शोभाममूनीति सरोजबन्धुः ।
करैःकरोति स्म रुषेव तीव्रैःकान्तानि कान्ताननपङ्कजानि॥१४६॥

स्थितां पुरस्तादतिदूर एव
क्रमेण च स्वस्य वशं प्रपन्नाम् ।

---

**सम्प्रतीति** । अहं संप्रति पुष्पवती रजस्वला चेति हेतोर्वातेन, व्याधूनानां पल्लवरूपाणां कराणामञ्चितेन स्पृहणीयेन चेष्टितेन मा मां स्पृशेति सहसा निवारयन्तीं मधुकरषिङ्गान् प्रतिषेधयन्तीं वासन्तिकां काचिदलिभिया मधुव्रतव्रातदंशभयेन नोपगता । वसन्ततिलकं वृत्तम् ॥१४४॥

**मरुदिति** । मरुदेव वायुरेव किशोरस्तेन विकीर्यमाणैर्मरन्दपूरैः पुष्परसौघैः महितैः पुष्पैश्च कृतोपहारेषु लतागृहेषु विशालनेत्रा विहृतिं विहारं व्यतानीदकार्षीत् । उपेन्द्रवज्रा ॥ १४५ ॥

**अम्भोरुहाणामिति** । अमूनि कान्तामुखपङ्कजानि अम्भोरुहाणां शोभां हरन्तीति हेतोः रुषैव तीव्रैः करैस्तीव्रतां नीतैः रश्मिभिः (न क्लान्तानि करोति किन्तु ) कान्तानि करोति स्म । अयं भावः भगवानंशुमाली स्वपद्यकमलजयीनि कान्तामुखानि संतापयितुं तीव्रीकृतैरपि किरणैर्न तानि तथा कर्तुं पारयति प्रत्युत 'रम्याणां विकृतिरपि श्रियं तनोति' इति न्यायेन रमणीयानि विदधाति । उपजातिः ॥१४६॥

**स्थितामिति** । पुरस्तात् प्रथममतिदूरमवस्थितां क्रमेण च पुनः स्वस्य

वोढा नवोढामिव सानुराग-
श्छायां तरुः क्रोडगतामतानीत् ॥ १४७ ॥

आक्रामता स्वामपि वारिसीमा-
मुष्णेन रोधोन्तरमूर्च्छितेन ।
कृत्वाथ कृच्छ्रादपि हीनसन्धिं
शीतं बतालम्बत कीर्तिमेव ॥ १४८ ॥

अथ विविध-कुसुम-केसर-सुरभि-केशपाशम्, अलघु-निदाघ-सलिल-सिक्त-निटिल-सक्त-चूर्ण-कुन्तलम्, अभिनव-पराग-पतन-जनित-नयन-कोण-शोणिमोन्मेषम्, आविष्कृत-चतुर-वचन-तानम्, विगतादर-विन्यास-विस्रंसमान-संव्यानम्, अलस-गमन-वशात् अनति-शिञ्जान-चरण-मञ्जरीकम्, अवा-

---

वशं प्रपन्नामुपागतां छायां तरुः कश्चिद्विटपी सानुरागो वोढा नवोढामिव, शनैः शनैः क्रोडगतामतानीद् वक्षसा परिरेभे, मध्याह्ने वृक्षस्य क्रोड एव छायासीन्नान्यत्रेति भावः । उपजातिवृत्तम् ॥१४७॥

**आक्रामते**ति । रोधान्तरे तीरान्तराले मूर्च्छितेन समुच्छ्रितेन स्वां वारिसीमामपि चाक्रामता उष्णेनोष्मणा ग्रीष्मातपेनेति यावत्, अथ कृच्छ्रादपि (अग्निच्छन्नपीतिभावः) जलाधोभागेन सह सन्धिं कृत्वाऽपि 'भक्षितेऽपि लशुने न शान्तो व्याधि'रिति न्यायेन शीतं कर्तृ, बतेति हर्षे, कीर्तिमेवालम्बत शीतस्य जलाधोभागे स्थितेः प्रसिद्धिमादाय तत्कीर्त्तिप्राप्तिरिह निरूपिता । यद्वा, बतेति खेदे, हीनेन सह संधिं विधायापि कीर्तिमेवालम्बत, नामशेषमेवाभूत् सर्वलोकेन तस्याननुभूयमानत्वात् । इन्द्रवज्रावृत्तम् ॥ १४८ ॥

**अथे**ति । कासारं वर्णयति—अथावनीपुरन्दरस्यान्तःपुरनितम्बिनीकदम्बं केलिसरः परिसरमासददित्यन्वयः।नितम्बिनीकदम्बमेव विशिनष्टि—अलघु महत्। निदाघसलिलं प्रस्वेदः।चूर्णकुन्तलाः अलकाः । विगतादरं विन्यासेन विस्रंसमानं

रित-परस्पर-कलह-लम्पट-कुच-युगलान्तर-कान्त-केसर-कुसुम-मालिकम्, अविरत-निःश्वसित-भर-दर-घर्म-जल-पङ्किल-कुङ्कुमानुलेपमवनीपुरन्दरान्तःपुर-नितम्बिनी-कदम्बम्, अम्बु विहार-लालस-मानसम्, आसदत्, केलीसरः-परिसरम्। तादृशं मृगदृशां समागमं संभृतोत्तरलया सरःश्रिया प्रेक्षणाय बहुशो व्यराजिषुः प्रेरिताः परिजना इवोर्मयः। आसाद्य, निरतिशय-निदाघ-निस्सहतयावगाढमिव कृपीटसंभवमम्भसि प्रतिबिम्बित-तटविटपि-पल्लवनिवहम् आवहन्तम् कृत्तिवसन-मूर्त्यन्तरस्य निजाम्भसो विजृम्भमाणतर-तरङ्ग-संघातैरङ्ग-कलित-भुजङ्ग-पुङ्गव-हार-शङ्कामङ्कुरयन्तम्, कूलङ्कष-विलोक्य-वन-प्रभा-विभवतया जलदेवता-तरङ्ग-कर-संघटित-कङ्कणापहरण-

---

संव्यानं यस्य तत्तादृक् कदम्बम्, न वारितं परस्परं कलहे कलौ लम्पटं लालसं यत्कुचयुगलान्तरं तत्र कान्ता केसरकुसुमानां मालिका यत्र तत्, अविरतं निःश्वसितभरेण दरं तनूभूतं यद्धर्मजलं तेन पङ्किलः कुङ्कुमानुलेपो यस्य तत्, निःश्वासप्राचुर्ये हि सर्वं शुष्कं भवेत्तथा तु नास्ति। अल्पश्वासव्यजनैर्हि स्वल्पमेव घर्मजलं शोष्यत इति क्लेदः शिष्यत इति। व्याख्यानपेक्षमन्यत्। तादृशां मृगदृशां समागमं प्रतिप्रेक्षणाय सरःश्रिया बहुशः प्रेरिता ऊर्मयस्तादृशाःपरिजना इव व्यराजिषुः। कीदृशी सरःश्रीरभूदित्याह—संभृतमुत्तरलं यस्या तादृश्येति। आसाद्य च परिसरं जलप्रतिबिम्बित-नवदलव्याजेन निदाघोष्माणमसहिष्णुराशुशुक्षणिर्घनरसे प्रविष्ट इत्यज्ञायि नितम्बिनीभिः। कृपीटसंभवो वह्निः कृत्तिर्वसनं यस्य स भगवान् शशिखण्ड-शिखण्डस्तस्य मूर्त्यन्तरम्मूर्त्यष्टकान्तःपातित्वात्सलिलस्येत्यर्थः। जलमूर्तौ शशाङ्कशेखरे पन्नगभूषणताऽवश्यं स्यादिति रिङ्गत्तरङ्गेषु साऽऽरोपिता। कूलङ्कषं विलोक्यं च यद्वनं जलं तस्य प्रभा सैव विभास्तस्य भावस्तत्ता तया। तरङ्गेषु

लम्पट-पवमान-पाटच्चर-सुरंगायमाण-मीन-विवर्त्तितानर्त्यावर्त्त-वलयम्, शीतल-जलाभिलाष-निपदातप-ताप-तृषित-शरद्भ्रू-खण्डामिव विकच-पाण्डुर-पुण्डरीकवनं दधानम्, रिरंसु-कल-हंस-संसदुत्तंसित-कमलिनीकम्, उल्ललदूर्मि-हिन्दोलन-चतुर-चक्रवाक-सन्दोहम्, इन्दीवरलोचनाजनः कासारमासादितवान्।

निरन्तरेन्दिन्दिर-सन्दोह-झङ्कार-सीत्कारा, समुदञ्चित-वाल-मुकुल-मिषेण संकुचितपाणिः अधिगत-कण्टक-श्रेणिरम्बु-जिनी-परिषदम्बुशैत्यभारेणेव समीरणवशेन समालम्बत कम्पम्। अनन्तरमनुपम-मणिमय-मेखला-दृढ-नियमित-नीवि-वसनाः, सरभसमितरेतर-सन्दानित-वेणिसन्तानाः, कर-कमल-तल-कलित-कनकशृङ्गाः मकरन्द-रस-पूरित-लाक्षा-करण्ड-मण्डलाः, प्रमद-वन-विहरणानीत-मृदुल-स्तबक-किसलयोपकरणाः, समुद्-द्योतमान-जलयन्त्र-नाली-पालीक-लोचनाः सलिल-केलिं समारभन्त।

---

कङ्कणत्वम् पवमाने वायौ पाटच्चरत्वम् मीनविवर्त्तिते नानर्तिनो नर्तनशीलाः य आवर्तास्तेषु सुरङ्गायमाणत्वमारोपितमिति विकचे पाण्डुरे कमलवने च शरद्भ्रूखण्डत्वमारोपितम् पक्कसस्यसंपन्नत्वेन शरद्भ्रूखण्डस्य पाण्डुरत्वं संभावितम्। एतेन इन्दीवरलोचनाजनः कासारमासादितवानित्यन्तः सन्दर्भो व्याख्यातो वेदितव्यः।

**निरन्तरे**ति। अम्बुजिनीनां कमलिनीनां परिषत्, मधुकरनिनदैरेव सीत्कारैः, निर्गतैर्बालमुकुलैरेव संकुचितपाणिभिः कमलरोमभिरेव पुलक-कण्टकैर्युक्ताऽभूदतिशैत्येनेत्यर्थः एवं सैव समीरवशात्कम्पमप्यालम्बतेति। अन-न्तरं दृढपरिधानं यथा स्यात्तथा नीवीं बद्ध्वा, परस्परमन्योन्यस्य वेणिसन्तानं संयम्य करेषु शृङ्गकोषानादाय करकलितपुष्परसकरण्डिकाः मृदुलपुष्पस्तब-

सोपानवीथीषु हरिन्मणीनां सर्वत्र शैवालितमंशुजालैः ।
सरो विभाव्य स्वसुखावतारमार्गाकुलाऽपश्यदिति स्म काचित् ।

अपरा शिशिरपयसि कलितसंचारां कांचिदकिंचनोदरी-कराञ्चलतरलीकृतेन लहरीभरेण सोपानपथादवतरन्तीम् अभिकिरन्ती तदीय-कुचास्फालन-रभस-परावृत्तेन तेनैव सन्ताडिता तदा निजाविनीतिफलं नियतमनुभूतवती ।

विकीर्य पाथो वदनारविन्दे
कस्याञ्चिदन्तःकृतमज्जनायाम् ।
तद्वक्त्रबुद्ध्या कमले पयोन्या-
ऽक्षिपत्प्रतीकारविधित्सयेव ॥ १५० ॥

---

कादिसहिताः समुद्द्योतमानानि जलयन्त्राण्येव नालीपाल्यो नलिकाभागा येषां तादृशनालीकसदृशानि लोचनानि यासां तादृश्यःस्त्रियःसलिलकेलिं समारभन्तेति।

**सोपाने**ति । हरिन्मणीनामिन्द्रनीलमणीनां सोपानवीथीषु जलावतारेषु सर्वत्रांशुजालैः शैवालितं सरो विभाव्य विचार्य स्वस्य सुखेनावतरणमार्गस्य ज्ञाने पर्याकुला सती काचिदिति पूर्वोक्तमपश्यत् । स्मेति पदपूर्तिमात्रप्रयोजनम् । उपजातिः ।। १४९ ।।

**अपरे**ति । अपरा च शिशिरसलिले प्रविष्टा सती काञ्चिल्ललनां कराञ्चलाभ्यां तरलितेन पारिप्लवीकृतेन जलवीचिनिचयेन सोपानमार्गादवरोहन्तीमभिकिरन्ती तदीयकुचयोरास्फालनमभिघातस्तेन रभसाद् वेगात् परावृत्तेन वीचिनिचयेन सन्ताडिता सती स्वस्याविनयस्य फलमन्वभवत् ।

**विकीर्ये**ति। कस्याञ्चिल्ललनायां कस्याश्चिद् वदनारविन्दे पाथो जलं विकीर्य क्षिप्त्वाऽन्तः कृतमज्जनायां जलमग्नायां सत्यां सोक्षिता बाला कमलोपरि जलोक्षणं चक्रे । तत्कमलं कृतोक्षणाया मुखमिदमिति मन्यमानेति बालाया मुग्धात्वं व्यञ्जितम् । स्पष्टमन्यत् । उपजातिः ।। १५० ।।

कुचशैलसीम्नि देव्याः
कीर्णं विमलाम्बुमेदिनीन्द्रेण ।
जर्जरितं परिमाणुव-
दवहत तद्वदनचान्द्रिकारूपम् ॥ १५१ ॥

मुहुः सरोवारिषु केलिलोला-
निमज्जनोन्मज्जनमाचरन्ती ।
बलाहकान्तः परिदृश्यमाना
सौदामिनीवाजनि चञ्चलाक्षी ॥ १५२ ॥

अपनीतेषु कुरङ्ग-नयनाञ्जन-रागेषु पुनरपाङ्गान्, क्षालितेषु दशन-वसन-रञ्जनेषु परिहृतवासनां घुसृण-रस-रञ्जनां, निपतित-सरसिज-वर-कलिकासु तनु-वल्लरी-पुलक-कलिकां, निमृष्टेषु निदाघ-बिन्दु-निकरेषु कासार-शीकर-प्रकरानपि संघट्टयन्, प्राचीमेव श्रियं प्रपञ्चयति स्म विस्मयनीयप्रकारो

---

**कुचे**ति । मेदिनीन्द्रेण देव्याः कुचशैलप्रदेशे कीर्णं विमलं जलं परमाणुवज्जीर्णं सत् तद्वदनचन्द्रस्य कान्तिच्छटाटोपरूपतामापदित्यर्थः । एतेन तत्कुचयुगदृढिमाभिव्यज्यते । आर्या वृत्तम् ॥ १५१ ॥

**मुहु**रिति । क्रीडापरा कापि तरुणीमणिः सरोवारिषु मुहुर्मुहुर्मज्जनोन्मज्जनमाचरन्ती सा चपलनयना बलाहके चञ्चन्ती विद्युदिवाभाति स्मेति । उपजातिः ॥१५२॥

**अपनीतेष्वि**ति। इतोऽग्रे वारिविहारेण यदेवापहृतं तदेव प्रकारान्तरेणार्पितमपीति वर्णयति । अपनीतेषु नयनाञ्जनरागेषु अपाङ्गरागान् कटाक्षवीक्षणजन्यानुरागान् दशनवसनमधरोत्तरोष्ठद्वयम्, घुसृणं कुंकुमम्, पतितानां सरसिजकलिकानां स्थाने पुलकावलिकलिकाम् । अत्र सर्वत्र संघट्टयन्नित्यनेनान्वयः करणीयो द्वितीयान्तपदानाम् । निदाघबिन्दवः प्रस्वेदाम्भांसि । प्राचीं प्राक्तनीं

वारिविहारः स्तिमितार्धोरुक-दुकूल-संसक्ति-व्यक्त-संदृश्यमान-प्रभा-भासुर-बन्धुरोरु-युगल-निगलित-विरल-मृत्पङ्क-मिलित-मेदुर-कदली-काण्ड-कान्ति-सम्पदः, संकुचित-रसार्द्र-संव्यानो-न्नामि-पुलक-कुच-कलश-वादित-शत-हस्त-स्वस्तिकाः, नितम्ब-बिम्ब-लम्बमान-वेणी-निष्यन्दामन्द-बिन्दवः, शिशिर-सीत्कार-कम्पित-बिम्बाधरा नितम्बिनीजनाः पुरः पुरः सद्भक्तिसंघानु-गामिन्यो निराक्रामन्नुपवन-सरसस्सखीजन-कृत-सारस्याः ।

निर्गत्य तस्मात्सरसो रमण्यः
प्रसाधिताङ्गयः परिकर्मभेदैः ।
अमन्दलीलाविलमम्बु मुक्त्वा
सरःश्रियस्तीरगता इवासन् ॥ १५३ ॥

---

स्नानात्पूर्ववर्तिनीं श्रियं शोभाम् स्तिमितमार्द्रीभूतं यदर्धोरुकमधोवस्त्रं दुकूलं प्राकारस्तयोः संसक्तिरङ्गाश्लेषस्तेन व्यक्तं संदृश्यमानं यत् प्रभया भासुरं बन्धुरं रम्यं चोरुयुगलं तेन निगलिताऽपहृता, विरलमृत्पङ्केन मिलिता सहिता या मेदुरा मांसला पीवरा कदली तस्याः काण्डः स्तम्बस्तस्य कान्तिसम्पद् यैस्ते। संकुचितं रसेन जलेन चार्द्रं यत् संव्यानमुत्तरीयं तदुन्नामिनो ये पुलकाः कुचकलशाश्च तैः वादितं संजातनादं शतहस्तस्वस्तिकं गणनविशेषो यैस्ते । बिम्बफलवदधरं येषां ते नितम्बिनीजनाः पुरः पुरः सती भक्ती रचनाप्रकारो यस्य स चासा संघस्तदनुगामिनो भवन्तः सखीजनानां कृतं सारस्यं सरसता यैस्ते तादृशाः । उपवनकेलितडागान्निराक्रामन्नुदगुरित्यर्थः । स्पष्टम् ।

**निर्गत्येति** । परिकर्मणामङ्गसंस्काराणामलङ्काराणां च भेदैः प्रसाधि-ताङ्गयो रमण्यस्तस्मात्सरसो निर्गत्यामन्दया बहुतरया लीलयाऽऽविलमालो-

समं मृगाक्ष्या सरसीविहारं समाचरन्तं नृपतिं समीक्ष्य ।
स्वयं प्रतीच्यापि विहारकांक्षी खरांशुरागादपराम्बुराशिम् १५४

छाया प्रवासचलितेन दिवाकरेण
　　साकं स्वयं च पुरतः पुरतस्समेत्य ।
प्राचीगृहं प्रतिविवृत्य ययौ विसृष्टा
　　मध्येपथं स्थितवतेव दृढोपगूढा ॥ १५५ ॥

पथिकोपरि-कोप-दीपित-रूपेण प्रसवचापेन निजकोपारोपित-पावकतयेव शान्तेषु सहस्रकरकान्तेषु कठिनातपक्लान्तिवशेन परिहृतपूर्वदिग्भागपतितैश्चकोरैराकर्षणादिव छायासु भृशमायामवतीषु, पार्ष्णिग्राह-तिमिरानीक-धाटीविलोकनायेव

---

डितमनच्छमम्बु (कर्मभूतं) मुक्त्वा तीरगताः सरःश्रियः सरोऽधिदेवता इव बभुरित्यर्थः । उपजातिः ॥ १५३ ॥

**सममि**ति । मृगाक्ष्या समं सरसीविहारं समाचरन्तं नृपतिं समीक्ष्य स्वयमात्मना रविरपि प्रतीच्या दिशा विहारकाङ्क्षी खरांशुस्तिग्मदीधितिरपराम्बुराशिमागादुपागमत् ॥१५४॥

**छाये**ति । छाया अनातपः प्रवासार्थं चलितेन दिवाकरेण साकं, न केवलं सहैव, किन्तु स्वयं पुरतः पुरतश्च समेत्य मध्येपथं मध्याह्ने आकाशमध्यमधिरुह्य स्थितवता सूर्येण दृढोपगूढा, संप्रति विसृष्टा सती प्राची दिगेव गृहं तत्प्रतिविवृत्य ययौ परावृत्ता ॥ १५५ ॥

**पथिके**ति । कोपेन दीपितं रौद्राकारं रूपं यस्य तेन । प्रसवः पुष्पं फलं वा तदेव चापो यस्य तेन मन्मथेन निजकोपप्रवेशितवह्नितयेव शान्तेषु सूर्यकान्तमणिषु, परिहृते पूर्वस्या दिशो भागे पतितैः स्थितैश्चकोरैराकर्षणादिव भृशमायामवतीषु छायासु सतीषु पार्ष्णिग्राहः पृष्ठत आक्रमणकारी परिपन्थी तद्रूपं यत्तिमिरं

समारूढ-शिखरि-शृङ्गेषु प्रद्योतन-किरण-भङ्गेषु, मदिरेक्षणा-वदन-पंकजेषु कमल-विकास-सर्वस्व-संगोपनायेव प्रविष्ट-प्रासाद-पश्चिम-गवाक्ष-मार्गेषु भार्गव-निरर्गल-तपः-फल-वितरणायेव चरम-गिरि-शिखरमवातरत् प्रसादशाली किरणमाली ।

अपर-गिरि-तरक्षोरातपच्छायलेशै-
हरित-मलिन-वर्णैरञ्चितस्यांशुमाली ।
कवलित-दिनधेनोः कण्ठरक्तेन रक्तं
विसृमर-निज-पादैः श्मश्रुलं प्रोथमासीत् ॥१५६॥

अस्रसन् दलवदातपखण्डाः
केसरा इव कराश्च विशीर्णाः ।

---

तस्यानीकस्य धाटी युद्धयात्रा तस्य विलोकनायेवेत्यर्थः । प्रद्योतनो मार्तण्डः । कमलानां विकासस्य यत् सर्वस्वं तस्य संगोपनाय प्रविष्टः प्रासादस्य पश्चिमभागस्थो गवाक्षमार्गो यैस्तेषु मदिरेक्षणामुखकमलेषु सूर्यास्तमयसमयं प्रतीक्षमाणाः स्त्रियो जालगवाक्षेषु स्थित्वा पश्चिमायां दिशि दृष्टिं ददुरित्यर्थः । भार्गवस्य शुक्राचार्यस्य निरर्गलं यत्तपस्तत्फलवितरणायेव प्रसादशाली पश्चिमाचलचूलामालम्बतेत्यर्थः। स्पष्टमन्यत् । शुक्राचार्यस्याश्रमः पाश्चात्यास्तसानुमतिवर्त्तत इति पुराणवेदिनः ।

**अपरे**ति । अंशुमाली सूर्यः । अपरगिरिः पश्चिमसानुमान् स एव तरक्षुर्मृगादनस्तस्य हरितमलिनवर्णैरातपच्छायलेशैरञ्चितस्य किर्मीरितवर्णवतः सतः इत्यर्थः, कवलिता या दिनरूपा धेनुस्तस्याः कण्ठरक्तेन रक्तं शोणवर्णं विसृमरैर्निजपादैर्मयूखैः कृत्वा श्मश्रुलं च प्रोथमासीत् तुण्डतामापेदे। अत्र पर्वतस्य तरक्षुत्वं, सूर्यकिरणानां व्याघ्रमुखश्मश्रुरूपत्वम् , अंशुमालिनश्च मुखरूपत्वं प्रोक्तमत एवांशुमालीति पदस्य प्रोथपदेन भिन्नलिङ्गत्वेऽपि वेदाः प्रमाणमितिवदन्वय इति बोध्यम् । मालिनी वृत्तम् ॥१५६॥

कर्णिकेव समलक्ष्यत बिम्बं
प्रावृडम्बुजगतेरहिमांशोः ॥ १५७ ॥

चटुल-नटन-विजृम्भमाणार्द्ध-नारीश्वर-दक्षिणेतर-चरण-कञ्ज-रञ्जनाय किंचिदाच्छिन्न-कोणां वर्त्तुलालक्तक-वर्तिकाम् अनुवर्त्तमाना, चरम-जलधि-चलाचल-वीचि-भक्तिका-चुम्बि-तेनार्द्धभागेन काम-काण्डीर-काण्ड-करण-कृतोपक्रम-काल-कारुक-सन्दीपित-हसन्तीमुखमुपहसन्ती मन्दं मन्दमपरदिग-राजत, तत्कुहरकूपमवागाहत च मण्डलं पुण्डरीकरमणस्य ।

---

**अस्रसन्नि**ति । प्रावृषि जातस्याम्बुजस्य गतिरिव गतिर्यस्य तस्य तत्सदृशस्येत्यर्थः । अहिमांशोरातपखण्डा आतपच्छेदा दलानीव जीर्णपर्णानीवा स्रसन् दूरीबभूवुः । कराश्च केसरा इव किञ्जल्का व्यशीर्यन्त एवमहिमांशो-र्बिम्बं कर्णिकेव सरोजस्य बीजकोश इव ('कर्णिका कर्णभूषणे बीजकोशे सरोजस्य करमध्याङ्गुलावपी'ति हैमः) समलक्ष्यतादृश्यतेत्यर्थः । स्वागता वृत्तम् ॥१५७॥

**चटुले**ति । चटुलं यन्नटनं तत्र विजृम्भमाणो योऽर्द्धनारीश्वरस्तस्य दक्षिणेतरद्यच्चरणकञ्जं पार्वतीचरणकमलं तस्य रञ्जनाय, किञ्चिदाच्छिन्न-स्त्रुटितः कोणो यस्यास्तादृशीं वर्तुलालक्तकवर्तिकां सूर्यरूपामनुवर्तमाना दधाना अपि च चरमे जलधौ चलाचलाश्चपलतरा इति यावद्या वीच्यो लहर्यस्ता एव भक्तिका तया चुम्बितेनार्धभागेन । काम एव काण्डीर इषुकार-स्तस्य यत् काण्डकरणं बाणनिर्माणं तत्र कृतोपक्रमो यः काल एव कारुक-स्तेन सन्दीपिता या हसन्ती अङ्गारशकटी तस्या मुखमग्रभागमुपहसन्ती मन्दं मन्दमपरदिगराजत । तत्कुहरकूपं कूपाकारं कुहरं च पुण्डरीकरमणस्य मण्डलमवागाहतेत्यर्थः । स्पष्टम् ।

अरविन्दबन्धुकुरुविन्दपिधाने
चपलेन बालशशिना व्यपनीते ।
घुसृणं वियन्मघवनीलकरण्डा-
द्गलितं यथा घनमदृश्यत सन्ध्या ॥ १५८ ॥

सागरोदरशयस्य मुरारेः कञ्चुकीव विलसत्करदण्डः
इन्दिरां द्युमणिरम्बुजगेहादात्मनैव सह नूनमनैषीत् ॥१५९॥

त्रिजगद्विजयोत्सवं विधातुं स्मरदेवस्य समुद्यतः प्रदोषः ।
स्फुरदिन्दुकरान्तरापदेशादुदयस्तम्भमलम्भयत्पताकाम् ॥१६०॥

---

**अरविन्दे**ति । अरविन्दबन्धुर्भास्कर एव कुरुविन्दस्य पद्मरागमणेः पिधानं (ढक्कन इति भाषा) तस्मिन् चपलेन बालशशिना शशिरूपेण व्यपनीते सति वियदेवाकाशमेव मघवतो नीलकरण्डस्तस्माद्गलितं घुसृणं कुङ्कुमं यथा भवति तादृशी सन्ध्या घनं निबिडमदृश्यत । अत्र वियति करण्डत्वम्, कमलिनीनाथे पिधानत्वम्, शशिनि बालत्वम्, सन्ध्यायां घुसृणत्वञ्चारोपित-मिति बोध्यम् । अत्र पद्ये कुटजासिंहनादोपनामकं कलहंसवृत्तम् "सजसा सगौ च कथितः कलहंसः" इत्येतल्लक्षणात् ॥ १५८ ॥

**सागरे**ति । सागरस्योदरं मध्यभागस्तत्र शेते इति तादृशस्य मुरारेः विलसन्तः करा एव दण्डा यस्य स इति सूर्यपक्षेऽर्थः।कञ्चुकिपक्षे तु विलसन् करे दण्डो यस्य सः तादृशो द्युमणिः सूर्योऽम्बुजगेहादिन्दिरामात्मना सहैव नूनमनैषी-दित्युत्प्रेक्षा । अत्र कमलानां लक्ष्मीभवनत्वं प्रसिद्धम्, तानि मुकुलीभवन्ती-त्यपि च । एवं सति यदा भानुः कञ्चुकी पश्चिमपयोधिं गच्छति तदा कमल-भवनस्थां रमामपि पितृगृहात्कन्यामिव पतिगेहं स्वप्रभुपादमूलं प्रापयत्यत एव कमलानि मुकुलितानि भवन्ति । स्वागता वृत्तम् ॥ १५९ ॥

**त्रिजगदि**ति । स्मरदेवस्य त्रिजगति विजयोत्सवं विधातुं प्रदोषः समुद्यतः । स च स्फुरतामिन्दुकरान्तराणामपदेशादुदयाचलस्तम्भे पताकामलम्भयदारोपय-दित्यर्थः । औपच्छन्दसिकं वृत्तम् ॥ १६० ॥

अतिवेलमनादृता द्विरेफाः कमलाल्या मुकुलीकृताब्जमुख्या ।
प्रतिकारधियाऽभजन् कलङ्कव्यपदेशात्तदमित्रमिन्दुबिम्बम् १६१
वेलातिपातेन पयःपयोधिं ज्योत्स्नासमुद्रः सुतरां विजित्य ।
अपूपुरज्जैत्रशशाङ्कशङ्खं प्राप्तश्च ताराघनपुष्पवृष्टिम् ॥१६२॥
पुष्पेषोर्जयसम्पदं निरुपमां पाणौ ग्रहीतुं मुदा
निर्यातस्य शशाङ्कमण्डललसद्भृङ्गारकावर्जिता ।
पादक्षालननव्यदुग्धलहरी प्राचुर्यतो वेलया
सर्वत्र प्रकटीकृता कुवलये चन्द्रातपच्छद्मना ॥१६३॥

ततः क्रमेण समेधमानामोद-कुमुदिनी-वन-मधुरिम-रसा-स्वादन-वैवश्य-विश्लथ-पक्ष-निष्पन्द-मूकेषु मधुकरानीकेषु,

---

**अतिवेलमिति** । मुकुलीकृतमब्जमेव मुखं यस्यास्तया कमलाल्या द्विरेफा अतिवेलमनादृताः सन्तस्तस्याः कमलश्रेण्या अमित्रमिन्दुबिम्बं कलङ्कव्यपदेशात्प्रतिकारधियाऽभजन्नित्युत्प्रेक्षा । औपच्छन्दसिकं वृत्तम् ॥१६१॥

**वेलेति** । ज्योत्स्नैव समुद्रो वेलातिपातेन वेलातिक्रमणेन पयःपयोधिं क्षीराब्धिं सुतरां विजित्य जैत्रं जयशीलं शशाङ्करूपं शङ्खमपूपुरत्तथा तारारूपेण घनां पुष्पाणां वृष्टिं च प्राप्तः । अन्योऽपि विजितो ढक्कां नादयति पुष्पैश्चाकीर्यते । अत्र घनपुष्पशब्देन जलग्रहणं न कार्यं तस्यार्थस्यात्रासंगतत्वात् । उपजातिवृत्तम् ॥ १६२ ॥

**पुष्पेषोरिति** । निरुपमां जयसम्पदं पाणौ ग्रहीतुं मुदा निर्यातस्य पुष्पेषोः शशाङ्कमण्डलमेव लसद् भृङ्गारकं मनोहरं जलपात्रं तस्मादावर्जिता मुक्तापादक्षालनाय या नव्या दुग्धलहरी, वेलया सान्ध्यसमयेन, सर्वत्र प्राचुर्यतश्चन्द्रातपच्छद्मना ज्योत्स्नानिकरव्याजेन प्रकटीकृता सती न प्रकाशते शार्दूलविक्रीडितम् ॥१६३॥

**तत इति** । ततः समुदितामोदस्य कुमुदिनीवनस्य मधुरिम्णो रसस्या-

शर्वरी-रमण-किरणाञ्चल-पर्व-चर्वण-निर्वृति-समुदञ्चितचञ्चु-विकारेषु चकोरेषु समुन्नत-चन्द्रकान्त-सौधजाल-प्रणालिकान्तर-कन्दलदमल-सलिल-सन्दोह-धारानुकारिणीषु चन्द्रिकासारणीषु, नरपालक-लोक-यामि-स्तम्बेरम-कुम्भान्तर-शयित-निषादिगण-कृतानुकरणेषु नितम्बिनी-कुच-कुम्भान्तर-शायि-तरुणेषु विरचित-विविधोपचार-संविधानं विहारसदनमासाद्य पुरन्दर इव पुलोमजया वरदाम्बिकया सह वसुन्धरापति-रविन्दत सन्दर्शितमिथःप्रणयरसोपहारं विहारम् ।

अविदितदिवसक्षपाद्यपाया-
नुपमसान्द्रपरस्परानुरागान् ।
कतिचन दिवसानसावनैषीत्
सममनया सचिवावधार्यकार्यान् ॥ १६४ ॥

कालाद्बहोर्वसुमतीकमितुर्मृगाक्षी—
श्रीवेङ्कटाद्रिपतिसेवनपुण्यपाकैः ।

---

स्वादनवैवश्येन विश्लथा ये पक्षास्तेषां निष्पन्दतया मूकेषु मधुव्रतसैन्येषु किरणाञ्चलरूपाणां पर्वणामिक्षुदण्डग्रन्थानां यच्चर्वणं तेन निर्वृतिः सुखम् । सारण्यः क्षुद्रनद्यः यामिनः प्रतियामं यातायातकारिणः । निषादिनो हस्तिपकाः । शायिनः शयनशीलाः । उपहारः प्राभृतम् । शिष्टं स्पष्टम् ।

**अविदितेति** । असावच्युतरायभूपः सचिवैरवधार्याणि कार्याणि राज्यव्यतिकरा येषु तान् कतिचन दिवसाननेकविशेषणविशिष्टानैषीदिति स्पष्टम् । पुष्पिताग्रावृत्तम् ॥ १६४ ॥

**कालादिति** । बहोः कालाद्बहुसमयानन्तरं वसुमतीकमितुर्धरणीजाने-

चन्द्रान्वयाभ्युदयहेतुमधत्त गर्भ—
मानन्दकन्दलममेयमिवात्मविद्या ॥ १६५ ॥

उत्पलदृशो गर्भवर्तिनश्चक्रवर्तिनः कुमारस्य समुद्रिक्त-सत्वगुणोन्मेषविशेषेणेव शनैः पाण्डिमानमपुषद्वपुरखिलम् । कुमारोदय-कुशल-सूचन-तमाल-दल-शेखरित-मुख-शातकुम्भ-कुम्भ-संभावनां कुशेशयदृशः कुचकलशौ मेचकचूचुकावपूपुरताम् । इन्दिरासरस्वत्योः पुरस्तादेव वसुमत्या, भर्ता ममैवायमिति गर्भगतं सुतं प्रति विस्तारिता हस्तवल्लरीव रोमराजिरराजीत् ।

अमृतरसातिशायिभिरर्भकगुणाद्भुतैराप्लावितेव वस्तुषु न केषुचिदवहद् अभिलाषम् ।

आपन्नसत्वामवगत्य धात्री—
मुखान्मृगाक्षीं मुदितः क्षितीशः ।
अतन्तनीदभ्युदयाय कर्मा—
ण्यनुक्रमात्पुंसवनादिकानि ॥ १६६ ॥

---

भार्याऽऽत्मविद्याऽऽनन्दकन्दलमिव गर्भमधत्तेत्यादिस्पष्टम् । वसन्ततिलका वृत्तम् ॥ १६५ ॥

**उत्पलदृश** इति । उत्पलदृशो वामनयनाया वरदाम्बिकायाः । तस्याश्च नीलचूचुकौ स्तनौ मङ्गलतमालदलशेखरितमुखानां शातकुम्भकुम्भानां संभावनामपूपुरताम् । इन्दिरासरस्वत्यावुभे अपि तं गर्भगतं नृपतिं स्वयंवरपतिं चिकीर्षाञ्चक्रतुस्तयोः प्रागेव वसुमती तमवरिष्ट रोमराजिरूपहस्तवल्लरी-समुदञ्चनव्याजेन ।

**आपन्नसत्वामिति** । स्पष्टमुपजातिवृत्तम् ॥ १६६ ॥

अंशुमालिनमिवादिमा दिशा
दुग्धसिन्धुलहरीव कौस्तुभम् ।
वासरे वरमुहूर्त्तशालिनि
प्रासविष्ट वरदाम्बिका सुतम् ॥ १६७ ॥

कुमार-समुदय-समय-समुदयदमेयामोदो मेदिनीपति-राकलितानेकविध-महोत्साह-विशेष-विधिः, ईप्सितातिशायि-विश्राणित-विहृति-विमोचित-वसुमती-खेचर-याचक-भावो निर्माय जातकर्मादीन् विधीन् निरवधिकमुन्मनास्तमात्मजन्मा-नमवलोक्य सफलजन्मानममन्यतात्मानम् ।

श्रीवेङ्कटाद्रीशवरप्रसादा-
ज्जातं कुमारं जगतीसुधांशुः ।
अमुं हरेरंशभवं विदित्वा
नाम्ना व्यतानीच्चिनवेङ्कटाद्रिम् ॥ १६८ ॥

भुवि भवान्तरसंचरणेन भुवनचक्रसमाप्तिक्रमम्, अनवरत-घटित-दृढ-मुष्टितया समाश्रित-त्राण-दृढ-मुष्टिताम् अनिदान-

---

**अंशुमालिन**ति । आदिमा प्राची दिशांशुमालिनमिव वरदाम्बिका सुतं प्रासोष्टेति सर्वं स्पष्टम् । स्वागतावृत्तम् ॥ १६७ ॥

**कुमारे**ति । ईप्सितातिशायि यद्विश्राणितं तद्रूपया विहृत्या लीलया विमोचितो वसुमतीखेचराणां भूमिदेवानां याचकभावो येन सः। स्पष्टमन्यत् ।

**श्रीवेङ्कटाद्री**ति । स्पष्टम् । उपजातिवृत्तम् ॥ १६८ ॥

**भुवी**ति। भुवि जगति भवान्तरेषु जन्मान्तरेषु भिन्नभिन्नजगत्सु च संचरणमुपगतिस्तस्य क्रमेण भुवनचक्रस्य समाप्तिः सम्यक् प्राप्तिस्तस्य क्रमं

हसित-कणिकाभिः अतीत-वसुमती-पतीनामपहसनम् अत्य-न्तारुण-चरण-पाणि-किसलयेन, उपगत-धरणी-रमण-परि-त्राणानुरागयोगम्, क्रीडन-समय-विकीर्ण-पांसुतया नैकविधा-नीक-पराग-योगेन निखिल-लोक-जयोद्योगमपि विद्योतयन् कणत्किङ्किणीक-चंक्रमणतया प्रतीप-भूमीपाल-मौलि-भाग-प्रघाण-पदार्पण-विभ्रममिव विभावयन् आनन्दपरतन्त्रम् अवनी-न्द्रम् अतनुत-विरचित-शैशवोचित-विविधविहारः कुमारः,

आलोकनैरमृतवर्षिभिरेष पित्रो-
राशीर्विशेषवचनैरवनीसुराणाम् ।
आनन्दसंततिभिरप्यखिलप्रजाना-
मभ्येति वृद्धिमनघश्चिनवेङ्कटाद्रिः ॥ १६९ ॥

अनन्तरमच्युतमहीमहेन्द्रो बाल्य एव समुल्लसदसाधार-णानुभावं नारायण-चरणारविन्द-निबद्ध-भावम् अत्युदारम्, कुमारम्, आलोक्य साकममात्यगणेन सकल-महीतल-सन्त्राण-धुरम्, अवतार्य शुभंयुनि दिने नरेशो दिदेश शाश्वतं युवराजपदम् ।

---

विद्योतयन्नित्यग्रेऽन्वेति । एवमग्रेऽपि । दृढमुष्टितां विद्योतयन् अनिदानं निष्का-रणं हसितस्य कणिकाभिर्लेशैरपहसनमुपहसनं वा विद्योतयन्नित्यर्थः । नैक-विधानामनीकानां परागस्य रजसो योगेन प्रघाणो बहिर्द्वारप्रकोष्ठकः। शिष्टं स्पष्टम्।

**आलोकनैरि**ति । अमृतवर्षिभिः पित्रोरालोकनैरवनीसुराणामाशी-र्विशेषवचनैरखिलप्रजानामानन्दसंततिभिरानन्दपरम्पराभिरपि अनघश्चिन-वेङ्कटाद्रिर्वृद्धिमभ्येति । वसन्ततिलकं वृत्तम् ॥ १६६ ॥

**अनन्तरमि**ति । सर्वं स्पष्टम् ।

अत्यादरादच्युतदेवरायं वरेण्यशीलां वरदाम्बिकां च ।
श्रेयोनिधानं चिनवेङ्कटाद्रिं श्रीवेङ्कटेशश्चिरकालमव्यात् ॥१७०॥

इत्येकवाराकर्णनमात्र-दृढावधारित-नव्य-काव्य-नाटकालङ्कार-पुराणागम-रहस्य-सारस्यानुबन्ध-समिन्धान-स्वाभाविक-प्रतिभानुभावया, विद्या-विशेष-निरवद्य-विद्वद्वर-सकल-कविकुल-श्रवणानन्द-चिन्तितानन्ताभीष्ट-फलाश्रयण-विश्राणन-कामगवीभवदशेष-भाषा-विषय-सविशेषोन्मेष-चतुरिम-गर्भित-सरस-प्रबन्ध-सन्दर्भया, विविध-विद्या-प्रगल्भ-राजाधिराजाच्युतराय-सार्वभौम-प्रेम-सर्वस्व-विश्वास-भुवा, निरुपाधिक-महोपकार-निर्माण-धर्म-निर्मल-हृदयया, निखिल-लिपि-विलेखन-नियत-वितरण-कृतहस्त-हस्तारविन्दया, विरिञ्च-चञ्चल-नयना-नखाञ्चल-समुदञ्चित-विपञ्ची-प्रपञ्चित-पञ्चम-मधुरिमोदञ्चन-विकस्वर-

---

**अत्यादरादि**ति । अत्यादरात् श्रीवेङ्कटेश्वरेऽत्यन्तानवधिकभक्तिहेतोश्चिनवेङ्कटाद्रिं वरेण्यं वरणीयमनुकरणीयं शीलं यस्यास्तां वरदाम्बिकां च श्रीवेङ्कटेशश्चिरकालमव्यादिति । उपजातिवृत्तम् ॥ १७० ॥

कविपरिचयो ग्रन्थसमाप्तिश्च—

**इतीति** । तत्तद्रहस्येषु सारस्यानुबन्धः सरसतानुषङ्गस्तेन समिन्धानोऽनुभावो यस्यास्तया। विद्याविशेषेण विद्याधिक्येन निरवद्याः। सन्दर्भविशेषणमिदम् विद्वद्वराणां वैयाकरणानां सकलकविकुलानां श्रवणेनैवानन्ददाः, चिन्तितान्यनन्तान्यभीष्टानि च यानि फलानि तेषामाश्रयणे स्वीकरणे विश्राणने परेभ्यो दाने च कामगवीभवन्तः कामधेनूसमाः, अशेषासु भाषासु (अशेषेषु) विषयेषु च सविशेषमुन्मेषो येषां ते, चतुरिम्णा गर्भिताश्च ये सरसाः प्रबन्धसन्दर्भा निबन्धरचना यस्यास्तया, उपकारनिर्माणमुपकारविधानमेव धर्मः । लिपिलेखने नियमेन दाने च कृतहस्तं चातुरीचणं हस्तारविन्दं यस्यास्तया,

कण्ठस्वरया, विपुल-तलातल-विहार-विनोद-साकारावतीर्ण-शतपर्णासन-वरवर्णिनी-मति-निर्णायिकया नानादेश-प्रतिष्ठितानेक-विरचित-वाजपेय-पौण्डरीक सर्वतोमुख-महाध्वर-द्विजवर-वितीर्यमाणाशीर्विशेष-परिपोषित-भाग्य-सौभाग्यया, नियत-रक्षित-कवि-कुटुम्बया, तिरुमलाम्बया निर्मितं वरदाम्बिका-परिणयन्नाम चम्पूकाव्यम् आचन्द्रतारकम् अभिवर्द्धताम् ।

## [ परिशिष्टम् ]

### अथ राजाच्युतरायप्रशस्तिः ।

स्वामिन्नच्युतराय भूषितमहासिंहासनं त्वामह-
　नाथं प्रागचले किलैक्ष्य सहसा नन्तुं नरेन्द्रैर्भुवि ।
विन्यस्ता मुकुटाश्चकासति भवद्दोस्सारमायाविदा
　शत्रुश्रीकुलभीरुमन्तरायितुं सौवर्णपात्र्यस्तताः ॥ १७१ ॥

---

नखाञ्चलैर्नखप्रान्तैः समुदञ्चिता वादिता विपञ्ची वीणा। विकस्वरो भास्वरः। विपुले तलातले पातालविशेषे विहार एव विनोदस्तस्मै साकारावतीर्णा या शतपर्णासनस्य ब्रह्मणो वरवर्णिनी जाया सरस्वती तस्या मतेर्निर्णायिकया, तां दृष्ट्वा लोकानां साक्षादियं सरस्वतीति बुद्धिरुद्भवति स्मेति भागः। नानादेशेषु प्रतिष्ठिता अनेके ये द्विजवराः, स्पष्टमन्यत्। नियतं रक्षितः पालितः कवीनां कुटुम्बो यया तया कविकुलाश्रितयेत्यर्थः। व्याख्यानपेक्षमन्यत्।

**स्वामिन्नि**ति। हे स्वामिन्नच्युतराय! भूषितमहासिंहासनं त्वामहर्नाथमिव प्रागचले उदयाचले एक्ष्य ( आ ईक्ष्य ) दृष्ट्वा नरेन्द्रैर्भुवि नन्तुं विन्यस्ताः मुकुटास्तताः विस्तारिताः, सौवर्ण्यपात्र्य इव चकासति विद्योतन्ते किमर्थं मुकुटस्तूपा निर्मिता इत्याह—भवतो दोःसारो बाहुबलमेव माया-

चित्ते श्रीहरिभक्तिमद्रिणि करुणां शृङ्गे भुजस्य क्षमां
वक्षस्सीम्नि रमां वहन्नविरतं वक्त्रे च वाग्देवताम् ।
मत्सक्तोऽयमिति प्रसादनवती मां नैष धत्ते तनौ
केनेत्यच्युतराय मन्तुमिव ते कीर्तिर्दिगालीः श्रिताः॥१७२॥

वल्गद्दिक्करिवर्गकर्कशगिरावस्थानवित्रासिनी
क्ष्वेडज्वालमिलत्फणीश्वरफणाशाणाधिरोहासहा ।
निर्यन्निर्झरपिच्छिलाचलनिराधारा धरा संप्रति
त्वारुह्यांसलमंसमच्युतमहारायस्य विश्राम्यति ॥१७३॥

त्वदुपकण्ठगतं सितचामर–
द्वितयमच्युतराय ! विराजते ।

---

वित्तेन शत्रुश्रियमेव कुलाङ्गनामन्तरयितुमिति । ( भीरुः स्यात्कातरे नार्यामित्यमरः ) । शार्दूलविक्रीडितम् ॥ १७१ ॥

**चित्त** इति । मत्सक्तोऽप्ययं मां तनौ नैव धत्ते, अन्या मदपेक्षया न्यूनप्रेमपात्राण्यपि ललना धत्ते, तत्कस्य हेतोरिति मन्तुमवबोधयितुमिव कीर्तिर्दिगालीः दिशासखीः समाश्रिता, यतस्ताः राजानं मदर्थमनुरुन्ध्युः, मदपराधमेतत्कारणं वा विज्ञाय ज्ञपयेयुरिति, शिष्टं स्पष्टम् । शार्दूलविक्रीडितम् ॥

**वल्गदि**ति । वल्गतां भ्रमतां दिक्करिणां कर्कशाभिर्गिराभिर्येन स्वस्या अवस्थाने सत्तायां वित्रासशीला तथा फणीश्वरफणाशाणेष्वारोहमसहमाना निर्यद्भिर्निर्झरैः पिच्छिला ये अचलास्तेभ्यः पतनभिया निराधारा धरा सम्प्रति तु अच्युतरायस्यांसलं मांसलमंसं भुजशिरोदेशमारुह्य विश्राम्यति विश्रमं लभते मोदते च । शार्दूलविक्रीडितं छन्दः ॥ १७३ ॥

**त्वदि**ति । हे राजन्नच्युतराय ! तवोपकण्ठमभ्यर्णं गतमुपागतं सितचामरद्वितयं, महोदयवति दानजलार्णवे प्लवनकेलि तरणक्रीडां जुषते सेवते

तव महोदयदानजलार्णव-
प्लवनकेलिजुषो यशसो भुजौ ॥ १७४ ॥

*   *   *   *

'करकृतमपराधं क्षन्तुमर्हन्ति सन्तः'
अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः क्षमा हि विदुषां धनम् ॥

---

इति तस्य तव यशसो भुजौ यथा स्यातां तथा विराजते प्रकाशते प्रतीयते । द्रुतविलम्बितं वृत्तम् ॥ १७४ ॥

*   *   *   *

अतिमात्रविशीर्णवर्णमात्रां
कुटिलार्थां कलिलां समासजालैः ।
गिरिधारिपदानुसारिकारि—
हरिरेतां व्यवरिष्ट मृष्टचम्पूम् ॥

कलये किल लक्ष्मणस्वरूपे
बुधरूपे बहुशो नमःशतानि ।
यदनुग्रहसख्यभाग्वचोभि—
र्मयि मन्देऽपि समुद्यमोदयोऽयम् ॥

रामप्यारी यस्य माता भीमसेनः सुधीः पिता ।
हरिस्तेनेयमाख्याता व्याख्या विख्यातु भूतले ॥

## अस्मत्प्रकाशिताः केचन छात्रोपयोगिनो ग्रन्थाः

**वैयाकरणसिद्धान्तकौमुद्याः** सटिप्पणं सुपरिष्कृतं शुद्धतमं विशिष्टं संस्करणम्। श्रीमद्भट्टोजीदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी श्रीमद् वासुदेवदीक्षितविदुषा विरचितया सुप्रथितया बालमनोरमाख्यया व्याख्यया, स्वरवैदिकीभागे श्रीमज्जयकृष्णकृतया सुबोधिन्या, लिङ्गानुशासने भैरवीव्याख्यया च समलङ्कृता शिक्षागणपाठधातुसूत्रगणोणादिशिक्षावार्तिकादिपरिशिष्टैश्च संवलिता मुद्रिता राजते। सा चेयं लवपुरीयप्राच्यमहाविद्यालयप्रधानाध्यापकैर्महामहोपाध्यायश्रीमन्माधवशास्त्रिभाण्डारिमहोदयैरपूर्वाभिष्टिप्पणीभिर्विभूषिता लेखकादिपरम्परागतान् दोषानपाकृत्य सम्यक् परिष्कृत्य च संशोधिता।

तदेषा सर्वाङ्गसुन्दरा द्विसहस्र (२०००) पृष्ठपरमिता सुचिक्कणपत्रेषु निर्णयसागरीयायसाक्षरैर्मुद्रिता पटवेष्टकवेष्टिता सर्वसामग्रीसम्भृतापि केवलं प्रचारभावमवलम्ब्याष्टाभी ८) रूप्यकैर्वितीर्यते विद्यार्थिभ्यश्च पञ्चभिरेव५) रूप्यकैर्दीयते इति भूयान् हर्षः

ग्राहकमहाशयाः सप्रश्रयं प्रार्थ्यन्ते यदनर्घस्यास्य ग्रन्थरत्नस्य वराटकमूल्यं विभाव्य दैनंदिनं विक्रयमत्यधिकं वर्तते। तद्भवद्भिर्द्वितीया वृत्तिर्यथा न प्रतीक्ष्या तथाऽविलम्बं त्वर्यताम्। ग्राहकसौकर्याय भागशोऽर्द्धेन सार्द्धरूप्यकद्वयेनापि विक्रीयते।

**प्रतिमानाटकम्**—नाट्यकलापारावारीणेन महाकविना श्रीमता भासेन प्रणीतं नाटकमूर्धन्यभूतमिदं नाटकं व्याख्यानेन विना छात्राणामतीव दुरूहमासीदितिकृत्वा व्याकरणसाहित्याचार्येण ब्राह्ममहाविद्यालयभूतपूर्वाध्यापकेन श्रीशीतलासंस्कृतमहाविद्यालयाध्यापकेन नैकटीकाकर्त्रा श्रीधरानन्दशास्त्रिणा रचितया संस्कृतव्याख्यया हिन्दीरूपान्तरेण च सहितं प्रकाशितम्।

अत्र संस्कृतव्याख्याने कोशव्याकरणध्वन्यालङ्कारभावा-

शयप्रकाशनेन, प्रामाणिकैरादर्शैर्मूलपाठसंशोधनेन, हिन्दीरूपान्तरेण, श्लोकानुक्रमणिकया, सुभाषितसंग्रहेण च निरतिशयो गुणातिशयः सम्पादितः। तदिदं सर्वाङ्गसुन्दरं २०० पृष्ठपरिमितं बहुमूल्यपत्रेषु निर्णयसागरीयायसाक्षरैर्मुद्रितं सार्द्धरूप्यकेण १॥) ग्रहीतुं शक्यते।

नाट्यकथामञ्जरी—अस्यां स्वप्नवासवदत्ता-मालविकाग्निमित्र-विक्रमोर्वशी-प्रियदर्शिका-नागानन्द-महावीरचरित-कुन्दमाला-ऽभिज्ञानशाकुन्तलोत्तररामचरित-वेणीसंहार-रत्नावली-मुद्राराक्षसप्रभृतीनां नाटकानां कथाः संस्कृतगद्ये परिणतास्सन्ति। संस्कृतसाहित्ये प्रथम एवायं प्रयासः। पत्रादिकञ्चातिरम्यमस्ति। पञ्चाशदुत्तरं चतुश्शतं पत्राणां सार्द्धरूप्यकद्वयेनैव दीयते।

वाग्भटालङ्कारः—इदञ्च पुस्तकं श्रीप्रेमनिधिशास्त्रिभिः सौभाग्यविमलाख्येन व्याख्याद्वयेन सहितं प्रश्नावलीसंवलितं विद्यार्थिनामत्यन्तमुपकारकम्। मूल्यं द्वादशाणकाः।

वृत्तरत्नाकरः—लवपुरीयप्राच्यमहाविद्यालयाध्यापकैः श्रीरामचन्द्रशास्त्रिभिर्निर्मितया बालबोधनीनाम्न्या व्याख्यया समुपेतमिदं पुस्तकं छात्राणां कृतेऽत्यन्तमुपयुक्तम्। मूल्यं द्वादशाणकाः।

नागानन्दम्—लवपुरीयप्राच्यमहाविद्यालयस्य प्रधानाध्यापकानां महामहोपाध्यायपण्डितशिवदत्तशास्त्रिणामनुमत्या डी. एम्. कालेजे संस्कृताध्यापकेन पण्डितसुन्दरदासशास्त्रिणा विरचितया दधिमथीसंज्ञया संस्कृतव्याख्यया हिन्दीभाषानुवादेन च समुपेतम्। मूल्यमेका मुद्रा।

सर्वविधसंस्कृतहिन्दीपुस्तकानां प्राप्तिस्थानम्—

मोतीलाल बनारसीदास

अध्यक्ष—पञ्जाबसंस्कृत पुस्तकालय, सैदमिट्ठा बाज़ार, लाहौर